हर्षपूर्णा हृदि नृणां॥ अत: श्वेच्छा रिणा कृष्ये हर्षस्थानानि चक्रमात्त॥ यादव:॥ हर्षस्था
नं यदि पुनरसौ वासरेश प्रयाते हर्षोत्कर्षे॥ वित्तरक्तितरां भूमिपाला स्तद्वृत्नी॥ क्षोणींधे

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | एकाद |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १२ | ११ | १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | शचक्रं: |

| १ | ११ | ९ | ७ | ५ | ३ |
|---|---|---|---|---|---|
| मे | वृ | मि | कि | सिं | क |
| तु | वृ | ध | म | कु | मी |
| दशाशचक्रं॥ | | | | | |

यैर्मिरविधिमयेद्विके
मा:शर्कैतुल्य:॥ तस्मा
द्गीता गिरिदवदरीमा
श्रयंते द्विषस्ते॥१॥
नारानाथा यदि पुन
रसो हर्षगे संप्रपन्न:॥ श्वेतंदघान्निरवधितदावा
नेनो क्तिको ढिं कांता भूर्तिं जनयति नृणां विश्वर्वि
ख्यातकीर्तिं कुर्याद्दर्प्यं प्रचुर नरपते भूरि विश्वासयाचं॥२॥ भूमि सूनोर्गतवति निजमंदिरं हर्षदो धि
ष्णां बालाद्भवति महती भूमिलब्धि: फलब्धि:॥ शत्रुच्छेदो भवति समरे रोग भूतिन वर्षे हर्षोत्के घानि
रवधिर्भवत्स्वेंचसंगात्त धनाप्ति:॥३॥ हर्षस्थानं व्रजति यदि भवेद्वत्सरे रौहिणेयो वा राज्येन प्रचुर
यतितत द्धित्ते मोन्नसपूर्वं॥ निन्नात्यन्नास्सुखमनुभवत्सर्वकालं कलन्नाद्दे हृत्स्वास्थ्यमनुभवति सदा
ष्णां निर्मत्त:प्रयाति॥४॥ विप्रघाराव नरपत्ते विप्रत्तो वीविशूषादाशापूर्तिं जनयति नृणां दिव्येह
वराद्ये:॥ विद्याद घात्सदसि नृपत्ते र्विक्रमाद्यानव द्यावर्षे हर्षालयमुपगते देवतानाममंत्य:॥५॥

लीलावत्यानयानुदित्तयालीलयाला लितोसौ दिव्यां शालां स्वयमुपगतो मालयेदेवशाला ॥ वृद्धिः
श्रेष्ठा विबुधसदसि ज्येष्ठता स्वात्स्वदेशे देव्यानीत्ये गतवति नृणां वत्सरे हर्षगेहे ॥ श०४फ०१ म्ले
च्छादाप्ति र्भवति नियतं म्लेछसंगान्नु शक्ति र्वीरं वारं हतरिपुकुले घयत्नः स्याद्विवृद्धिः ॥ दः खं वर्षे
भवति न पुनर्वर्षभाजं तु मूर्ख आहर्षोत्कर्षो जयति सततं हर्षिते भानुसूनो ॥ ७ ॥ चत्वारो यदि वत्सरे
समनुदिताः स्युः खचरा हर्षिताः राज्याप्तिविधैर्विधैरनुनयासं भावनास्यान्नदा ॥ आद्यहर्षपदे
त्रपूर्णफलदा मध्या द्वितीयेमता ॥ स्वल्पा साहितृतीयहर्षभवने तुर्ये निकष्टाफल ॥ अथ ग्रहाणां
हर्षबलानयनं ॥ तत्र चत्वारि हर्षस्थानान्युक्तानि तेजसिंहेन ॥ निधि ग्र तो श ३ ष ६ ड ६ ५ १ शिवा १
त्नजाप व्यय १२ इनात्प्रथमं खलु हर्षदं ॥ स्वच्छमनुष्ठमथो द्वितयं मतं निखिलखेट गृहेषु तृतीय
कं अथ यदि नेन्नखगास्य तु यो षितो भवति ॥ रात्रिषु हर्षपदं तथा ॥ उदयतस्त्रिनयं त्रिनयं क्रमाद्ध्रुवति १।
२।३।७।८।६।८।न्नृघुसदां ४।५।६।१०।११।१२। चचतुर्थकं । अत्र क्षमरसिंहेन देत्तायकं निजगृहं सर्वेषां ह
र्षपदं भवतीत्यनेन श्लोकार्द्धेन स्वगृहमेव हर्षस्थानं मुक्तेन तु स्वोच्चमिति ज्ञेयं ॥ स्थानादिहर्षः ॥ चत्वा
रो यदि वत्सरे समनुदिताः स्युः खचरा हर्षिता राज्यप्राप्तिविधैर्विधैरनुनयासं भावनास्यान्तदा ॥ ८ ॥
आद्ये हर्षपदे नु पूर्णफलदा मध्या द्वितीये मता ॥ स्वल्पास्तो हितृतीयहर्षभवने तुर्ये निकृष्टफलं ॥

ता॰पु॰ए॰ १ अथ ससौम्यदृष्टः यावद्भिः सौम्यैर्दृष्टस्य यत्फलं तावद्गुणवलानि। एवमुथशिलमूशरिफयोः॥

अथ पुण्यपौरोहित्यं अनुगामी स्वसेवकाङ्गयं॥ अथ बलं प्रसंगादिष्टकष्टविचारो लि-
ख्यते॥ तत्त्रयोजनमत्कैरत्नावल्यां॥ ताजिकोक्तफलादेशः प्रवक्तुं शक्यते यतः॥ इष्ट-
५२ कष्टफलज्ञानान्निर्णयस्तदुच्यते॥ स्वोच्चे १ मित्रोच्चगे २ मार्गी ३ सुहृत्सौम्या-
वलोकितः॥ ४।५ उदितः ६ मकरादिषट्के ७ त्रित्रिकोणाप्ययगा ३।५।८।११ पवा ९ कौ-
णेमध्ये ८ मित्रषड्वर्गे १० स्वगेहे ११ सूर्यभागकाः १२ मूसरिके १३ मुथशिलः सौम्यैः १४
सौम्यांतको॥ १५ युतः सौम्यैः सह मूशरिफमुत्थशिलः॥ पृष्ठोदयोऽशुभमध्यशुभे १६॥
एवं बलयुतः खेटो ज्ञेयः षोडशधा बुधैः॥ नीच १ शत्रूच्चगो २ रश्मिनग्नहस्पात अर्के १२
भागांतरैः वक्री ३ रिपु ४ पापावलोकितः ५ अस्तगो ६ यामभागस्था ७ लग्नाद्रिस्फारि ५२
मृत्युगः ६।८।१२ १ वर्गोत्तमविहीनो यः ९ शत्रुवर्गे १० गृहेपि च ११ सूर्यभागस्थितः १२
क्रूरैः रिःफे १३ मुथशिलोपि च १४ पापयुक्तो १५ मध्यगतो १६ ज्ञेयः खेटो बलोज्झितः इति॥

ला ध्वा: शेषास्पुरित्थं राशिबलं स्मृतं ॥ इति राशिबलं प्रोक्तं पुराणाचार्यसंमतमि
ति ॥ अथास्थाग्रहाणां बलमुक्तं पयनामेन ॥ अत्रैकैकं प्रतिसार्द्धविंशोपकं ५
बलं ज्ञेयं संपूर्णबलं षड्विंशोपकात्मकं ॥ मध्यमबलं त्रिविंशोपकात्मकं ॥ अमुन
मध्यमबलेऽशं शान्तयथा ॥ भून्ये हानिं तथा क्लेशो चार्द्धे क्लेशो महद्भयं ॥ वैमनस्यं त
थार्द्धेगो रूपे प्रोक्तमिदं फलं ॥ सार्द्धरूपेण नोपीडा ॥ द्वाभ्यां दुःखसुखं समं ॥ सार्द्ध
द्वाभ्यां ३।४५ सुखावाप्तिस्त्रिभि ४।२० र्भोगं सुखं धनं ॥ सार्द्धचैयेव ५।१५ सर्वसिद्धिः
श्चतुर्भिर्द सर्वनाशयश इति ॥ निर्बलग्रहलक्षणं तु विशेषतश्चेद्दृश्यदुरके योगव
शान्नैतो विंशदीनविष्यन्तीति ॥ तत्र बलानां सूर्यादीनां फलमुक्तं नैत्रानिहेन ॥ त्व
गृहपितृकारिभवाद्दिरवो विनष्टे द्रुर्धदायारतिरुजावतिजेलघुर्वे ॥ ज्ञेशानहो
निरणुवृत्त्यपपुत्रपत्नीज्य मृक्तेत्व भोगसुखनानुगामी: शनौ चेति ॥ अथायुर्वृत्तिरल्पवृत्तिः ॥

४१

परं कूरनुर्यहृष्टिरहितो लग्नहोपदिशन्॥ तत्सम्नेवेन वलमिति वीक्षते लग्नं सवलीति
समरासिंहः॥ इति दृग्वलं॥ अथ यलं लग्नादिद्विवादशभावेसहवानो वलानयन मुक्तं॥
उत्तमावस्था॥ तन्वादिकानां निह सहनो नृपत्यं कर्वलं चैव वलं प्रदिशं स्वनो जीव
ज्ञदृशा सेमते नृत्यं मिथुनरूपान्वित माप्य मेषु॥ चतुष्पदा द्विपपि चार्द्धयुक्ते न कीटने
किं चनयाजनीयं मृगांगभव्यामगाददृग्वियोग युगाः॥ शप युक्ता नमीति स्फुटं स्यादि
ति॥ विशेषमाह वामनः॥ स्वस्वामिवलवत्वेन ज्ञेया राशिर्वलाधिकः॥ जीवज्ञदृ
ष्ट्यायुक्तो वा स्वस्वस्वामियुतेक्षितः॥ पृष्ठोदयाक किंमृग धनुर्मेषवृषाख्यमी॥ शे
षाः शीर्षोदयाज्ञेया मीनस्तूभयतः स्मृतः॥ शीर्षोदयादिनवलाः शेषा रात्रि
वलाः स्मृताः॥ नृराशयो वलं लग्ने स्यात् दशमस्यास्तु चतुष्पदाः॥ वृश्चिकः सप्तम
स्थाने चतुर्थे जलराशयः॥ संध्यायां वृश्चिकोराशीर्दंवसेनरराशयः॥ रात्रौ व

४१

ततोस्तएवं क्रमेनोवद ४ काष्ठ १० द्विपंक्तिभिः॥ मासैर्भुवासाह्विवेदैः युगैः साह्वियुगै गुरोः शनेः साह्विर्भुवाराभेवेदैः सार्द्धैश्चवह्निभिः इत्युदयास्तदिनज्ञानं॥

| | पूर्वास्त पश्चिमे | पश्चिमोदया दिवं | वक्रात्पश्चिमास्त | पश्चिमास्त पूर्वे | प्रागुदयात | मार्गात् सूर्यात् | स्तादुदयः मा ४ | उदयाद्वक्रमा २१ | वक्रान्मार्गः मा २ | मार्गादस्तमा | भोगः |
|---|---|---|---|---|---|---|---|---|---|---|---|
| बुध | दिन ३२ | दिन | दिन ८ | दिन १६ | दिन ४ | दिन ३२ | मास १ | मा ४।८ | मास ४ | मा ४।१८ | गुरु |
| शुक्र | दिन ७ | दिन | दिन ३३ | दिन ८ | दिन ३ | दिन २४ | मा ७।८ | मा ३ | मास ५ | मा ३।१५ | शनि |

वक्रः उदयः मार्गः स्तः

अथ ग्रहगतिबलं॥ अथ शीघ्रगस्य कोर्थः मंदगतेर्मध्यमगति न्यूनस्य स्पष्टगतेर्ग्रहस्य सबलत्वं॥ तथा मध्यमगतेर्मध्यगतितुल्यस्पष्टगतेर्ग्रहस्य च सबलत्वं मध्यमगतितो धिकस्पष्टगतेर्ग्रहस्यबलाभावो ज्ञेयः॥ अत्र भौमस्य गतितुल्याः कलाद्विगुणाः बलं भवति॥ बुधस्यगतिकलाः षड्गुणाः एकोनाशीतिहृता बलं भवति॥ गुरोर्द्वादशगुणाः शुक्रस्य स्वंशरहिताः॥ शनेस्त्रिंशद्गुणा इति मथिता योग रुसंप्रदायाज्ञेयः॥ इतिचेष्टाबलं॥ अथ दृग्बलं॥ तत्रैव॥ लग्नं पश्यति यावत्या ग्रहस्य वीर्यं स्यात्॥ शुभदृष्टस्य च पापग्रहेर्तुर्यदृशान्तो तस्य पादोनं॥ अत्र यस्य ग्रहस्य पावतीलग्नापरिदृष्टिस्तावद्वलंतस्य दृग्वलं॥ अथ शुभदृष्टस्य यावती शुभदृष्टिः सापादोनाबलं स्यात्॥ ॥

४०

विधेयं। तदंशादिकृतानां स्थानाबलं। अथ यमुनस्य समनालिभो यदा क्रूरग्रहसहितो भवति॥
तदा न बलमित्यपि ज्ञेयं। अथ ग्रहस्य मार्गीशारंभदिने उदयदिने च बलं यचयः॥ अथ
ग्रहस्य मार्गीदिनमारभ्य। वक्रदिनपर्यंतं। अथोदयदिनमारभ्यास्तपर्यंतं या दिनसंख्या
तदर्द्धं विधाय तावत्संख्याक्षिषष्टिकलात्मकं बलं वक्रदिने स्तदिने च बलं शून्यं॥ अत
रनुपातः॥ यदि मध्यदिनेः पूर्णशुभबलं लभ्यते॥ तदा मार्गीदिनाद्गतैः वक्रदिवसैस्त
थाग्रहोदयदिनाद्गतैश्च पूर्वी दिनैः किमिति॥ अथोदयास्तवक्रमार्गीदिनानां ज्ञाने सुगमो
पायेन श्रीमद्गुरुचरणैः सिद्धांतचिंतामणौ उक्तं॥ पूर्वास्ततः पश्चिमउद्गमोस्माद्वक्रं त
तोस्तः॥ [illegible] परउद्गमः प्राक्। मार्गी पुरोस्तैः खलु दंत ३२ दंत ३२ वेदै ४ ४०
नृपै १६ वेद ४ रदै ३२ र्बुधः स्यात्॥ भृगोः सार्द्धद्विमासस्वपक्षमासे स्वाश्विदिनैः क्रमात्॥ नवति
स्वप्राश्विदिवसैर्मासेर रव्यभिज्ञेस्तथा॥ भौमास्तादुदयस्तस्माद्वक्रस्तदनुमार्गता॥ [illegible]

प्तमान्नवकोंतिचयद्रूपबलं॥ अथ पत्र्वदशमोंदादशांतंमपचयेनरूपंबलंज्ञेयंमित्य
र्थः॥ इति कालबलं। अथ निसर्गबलं। तत्र निसर्गबलमुक्तं ताजिकप्रदीपे। रूपस्य सप्त
मोंशः ८। ३५ बलं भवेत्सूर्यपूर्वस्य। तत्र द्यादिग्रहे। भौमज्ञगुरुसितेंदर्कजं निसर्गजं
स्यात्॥ श मौ बु गु शु च सू॥ इति निसर्गबलं। अथ चेष्टाबलं॥ समरसिंहः॥
मंदगतिः शीघ्रगति अ १ ० ० ० ० ० ० १ वक्रः क्रूरदृग्गहितः॥ क्रूरायुक्तो बलबान्
शुभयुतदृष्टः क्रमाभ्युदयः सूर्यस्य चेक भोगो॥ इति एतत्स्यष्टमुक्तं ताजिकमुक्तावल्यां॥
१ २६ ३४ ४३ ५१ ०
द्वित्रांशाः स्युपानावार्यमथार्कोशगानां च। शुभसमतलिप्तस्य बले क्रूरासहितस्य रू
पं स्यात्॥ नाशोदययार्द्धभागस्थितस्य बलाशी घ्रगस्य न भ्यगतेर्विति॥ अत्र सूर्यो यद्वा सि
नवांशे न स्तिन्नेव नवांशे स्थितस्य ग्रहस्य भागाद्येद्विग्रहांशषष्टित्युक्तं न वशेषं बलं भव
ति॥ अथ शुभाशुभग्रहेन समागमनतिलिप्तस्य पंचषष्टिबलं॥ न्यूनाधिकत्वेन द्वयोरंतरं त्रिंशान्न्यूनं

३९

यदितृतीयग्रहेऽलग्ने मेषकादिः सराशिमानमध्येशोध्यः शेषषष्टिगुणं प्रहरमा
नेन भक्तं कलादिलब्धं गुरुशनिवर्ज्यं। अयं दिवसादिबलं। तत्र लग्नमध्ये रवि
शोध्यः यच्छेषं न्यूनं तत्र यातं द्वादशस्थानादिकं विंशद्गुणं बलं।। अधिकं षड्भ्यश्च्युतं वि
धेयं शेषराश्यादि विंशद्गुणं पुंग्रहाणां बलं भवति। पुंग्रहाणां न्यूनलग्ने
षडधिके तु न बलं। एवं न्यूने लग्ने षड्भ्यो न्यूने सति स्त्रीग्रहेषु न बलं षडधिकं च
ड्नं न वाधिकं द्वादशान्यक्तमेव शेषं विंशद्गुणं स्त्रीग्रहवीर्यं भवति। यतो
दिननिशाः पुंस्त्रीप्राबल्यमुक्तं। सौम्यौ तु विरामः। एतत्स्पष्टमुक्तं मुक्तावल्यां।। अर्को
नलग्ने च यतस्त्रिराशिं यावत्स्वरत्वापचयेन रूपं।। पुंस्त्व न रवेः षट्सु चयेन वांते षड्
न्यस्त्वायचयेन वेद्यं। अयमर्थः। अर्कोनलग्ने च यत्र त्रिराशिं यावच्चयत्नो वृद्धिः ता ३९.
रूपं बलं ज्ञेयं। त्रिराशितो ग्रपचयेन रूपं पुंखेटेषु बलं।। अन्यखेटेषु स्त्रीग्रहेषु स

अत्रार्काच्छुक्रः सप्तमः कदापि न संभवत्यतोत्र सप्तमशब्दः परमांतरवाची ज्ञेयः ॥ अत्र सूर्यशुक्रयोः परमांतरांशैः पंचाशत्संख्याकैर्वलं साध्यं ॥ उक्तंच मुक्तावल्यां ॥ रवेः सप्तमे चंद्रभौमौ बलाढ्यौ शुभे पंचाशत्तुल्ये तरे दैत्यमंत्री ॥ सूर्ययुक्ता त्वेते सर्वेपि निर्बलाः ॥ अथ बलानयनं ॥ सूर्यस्य चंद्रभौमयोरंतरं षड्भं स्यात्तदंशास्त्रिभक्ता बलं भवेत् ॥ अत्रोपपत्तिः ॥ कृष्णवत्तवत्सूर्यशुक्रयोरंतरे पंचाशदंशमध्ये स्यात्तदंशाः षड्गुणाः पंचभक्ताः शुक्रबलं स्यात् ॥ अत्रोपपत्तिः यदि पंचाशदंशैः षष्टिकलास्तदेकेन किमिति ॥ उभयोरंशाभिरपवर्तितकेन गुणकस्थाने षट् भाजके पंचेत्युपपन्नं ॥ अथ जीवशन्योरर्द्धरात्रानंतरं बलारंभः तृतीयप्रहरांते बलं पूर्णं ॥ चतुर्थप्रहरांते बलं शून्यं ॥ अतः सूर्यादारभ्य मानमानीयं अर्द्धरात्रानंतरमिष्टकालस्तदानास्मिन्नर्द्धरात्रः शोध्यः ॥

राशुपुत्ररार्द्धे स्थितस्य भोग्यांशा अब्दगुणा बलं। अत्रोपपत्तिः। यदि पंचदशांशैः
पूर्णबलं ६० लभ्यते तदा स्थिरराशिस्थितग्रहभुक्तभोग्यै रंशैः किं। अत्राभ
योः पंचदशभिरपवर्त्तने कृते। अंशा अब्दगुणाः कार्या इत्युपपन्नं। एवं विषमसम
राशिभागानां पुंस्त्री ग्रहाणां स्थिरराशिसंस्थग्रहबलवद्बलं बयं ज्ञेयं। इति स्था
नबलं॥ अथ दिग्बलमुक्तं। तत्रैव। नवमसहजषष्ठांगायपुत्रांत्यभस्था द्युमणि
तइहरवला दिग्बलाढ्या भवेयुरिति॥ अत्र सूर्यादीनां नवमादिस्थाने पूर्वोक्त
युक्त्या भावफलं तुल्यमेव बलं ज्ञेयं॥ अथैतेनव प्रथमहर्षबलं समरसिंहेनोक्तं॥
इति दिग्बलं॥ अथ कालबलं॥ तत्र समरसिंहः॥ गुरुमंदौ यदि पश्चिमरात्रौ॥ ॥
शुक्रेंदुभूसुताः सायं। उदयंति तदा बलिनो नरस्महा अह्नि नक्तमपरे च॥ अ
त्रार्कास्तमयलग्नात् अर्कोदयः कालः॥ सायं शब्दवाच्यः॥ तत्र चंद्रभौमौ पूर्णबलौ ६०

लाः चरणांपंचदश १५ कलाः अथ लग्नसंस्थग्रहे पूर्णावलं द्वादशसंधिविरामवि

कलांतो लग्नभावप्रारंभः प्रथमसंधिविरामे यावत् भावफलापचयः अंतरस्थग्र

हे नुपातः कार्यः सचानुपातः पूर्वंग्रहसंध्यंतरे कार्यमित्यादिना भावफलानय

नार्थ। कृतेनैव। अथ लग्नस्थग्रहस्य भावफलमेव वलं। केंद्रस्थग्रहस्य भावफला

देवि वलं। पणफरापोक्लिमस्थग्रहस्य भावफलएव वलं। केंद्रस्थग्रहस्य भाव

फलाद्धमेव। चतुर्थांशावलमिति॥ अथ स्त्रीग्रहाणांचतुर्थ्यादि षड्भावेषु वलं वल

नौ पूर्वयुक्त्या चतुर्थ्यादि षड्भावस्थानां स्त्री ग्रहाणां भावफलमेव तत्र त्वं वलं।

एवं पुरुषग्रहाणां सप्तमादिशमादिषड्भावेषु स्थितानां भावफलमेव वलमिति।

अथ स्थिरराशिस्थग्रहवलं। तत्र राश्यादि प्रारंभे वलापचयः। पंचदशांशेः

पूर्णवलं राश्यंते शून्यमतो ग्रहस्पष्टं राशिपूर्वार्द्धे स्थितस्य ग्रहस्य भुक्तांशाः

३१

मुशाल्लहारंभे बलारंभे [illegible] अर्धे पूर्णं बलं। अंते शून्यं बलं। तत्र आविद्यमाने मुसल्लह
के मेषप्रवेशारंभे शौर्यादि चतुर्गणाः स्वमुसल्लहबलं स्यात्। अत्रोपपत्तिः। यदि मुशल्ल
हार्द्धेन सपादोंस ५८ मितेन पंचकलामितं बलं तद्देशेन किमिति। अत्र नाज्ये चतुर्गुणाकः। अ
तौ शौर्यादि चतुर्गुणांकेन वित्युपन्नं। एवमनुपातेन। धिमित्रादि पूर्वोक्तेषु मनवेसलग्रहस्याह
द्दो द्रेष्काणमुसल्लहबलं साध्यं। अथ सर्वबलैक्यं ग्रहाणां परि अन्येषां ग्रहाणां द्रेष्काणः। स
मागता स्तो देकेन गुणिते षष्टिभक्ते ६० स्फुटं बलं स्यात्। एवं सविशेष पंचवर्गीचक्रनिरूप
णानंतरमन्यस्थानबलं मुक्तं नरसिंहेन॥ यो लग्ने केंद्रे वा त्रिकोणे वा यवी [illegible] तल
ग्ने। पुरुषांगना [illegible] वत्नी य भवने स्त्रियापि नवनाते। पुंखेटा पुंराशौ। स्त्रीराशौ स्त्रीग्रहाद
लिनः स्थिरराशौ वा भवंतिते बलिनः॥ एतत्स्पष्टं गणितपूर्वकमुक्तं नक्षावल्यां॥ लग्नकें
द्रेतदुपस्थितग्रहे रूपकादि चरणे निश्चितं बलं। स्त्रीपुरुष भवने नवांतनः पुंसु भावफलतोप
रोगषु। स्थिरराशौ। सर्वेषां पुंस्त्रीराशौ पुंगनास्त्व्यानामिति। अत्र लग्ने ग्रहः पूर्णवीर्यः केंद्रे
अर्द्धवीर्यः पणफरापोक्लिमयोः अल्पवीर्यः। तत्र पूर्णबले षष्टिकलात्मकं। अर्द्धे त्रिंशत्क

कस्थाने रूपंहरस्थाने नवट इत्युपपन्नं। एवं ग्रहवले स्वस्वपरमवले न स्वस्वसप्तमगृहे
न च पूर्ववदनुपातयुक्त्यास्वोपपत्तिकं। वलं सौम्ये स्वोच्चवलं त्वनुपाते न प्रागानीत
मेव अधिमित्राघुच्चेनुक्तवदनुपातेन वलं साध्यं। उच्चराशिभावे स्वोच्चवलमेव कर्त्तव्यं।
अथ ग्रहदृक्काणे नवांशानां सप्तवेनैवाल्पमिति वचनात् नावदंशैरेवानुपातः। तद्यथा।
ग्रहस्य वर्त्तमानदृक्कारंभे वलारंभः। दृक्काणमध्ये परमं वलं २० दृक्काससमाप्तौ वलं शून्यं० तत्र ग
हदृक्काभुक्तांशयोरल्पदृक्कांशा पंचदश गुणा वर्त्तमानदृक्कांशभक्ताः दृक्काणवलं स्यात्।
अत्रोपपत्तिरनुपातेन। यदि वर्त्तमानदृक्कांशैः पंचदशकला लभ्यंते। तदा स्वग्रहभुक्तदृ
क्कांशैः किमिति फलं दृक्काणवलमित्युपपन्नं। अथ दृक्काणप्रारंभे वलोपचयः पंचमांशसमा
प्तौ पूर्णवलं १८ शांससमाप्तौ शून्यं वलं।० तत्र ग्रहविद्यमानदृक्काणानुक्तांशयोरल्पतं
शादिद्विगुणकलादिवलं स्यात्॥ अत्रोपपत्तिः। यदि पंचभिरंशैर्दशकला मितं वलं तदैके
नकिं। अत्र पंचभिस्पवर्त्तितेन गुणकस्थाने द्वयं भाजकस्थाने। १ एकमित्युपपन्नं। अथ

ग्रहास्ततेमेषराशौ ग्रहो निर्बलं ॥ पूर्णबले स्वे राशिके मुख्यबलं वृषे पं तत्रार्कचंद्रयोरेकमेकं स्वग्रहमतो न
संदिग्धं भौमादीनां तु स्वग्रहद्वयं सद्भावात्तत्सप्तमस्यापि द्वैविध्यात्कथमत्र बलानयनोपायः ॥ उ
च्यते भौमादिषु चारवशान्निकटस्थितमेव स्वगृहं न तु दूरस्थितमिति संप्रदाययुक्तिरिति
॥ अथ ग्रहं स्वगृहसप्तमादिशोध्यं शेषं षडधिकं चेद्वादशभ्यः शुद्धं नो चेद्यथास्थितमेव स्थाप्यं त
तस्यांशाः षड्भक्ताः कलादिबलं स्यादिति ॥ अत्रोपपत्तिः स्वगृहप्रारंभे पूर्णं त्रिंशत्कला
त्मकं बलं तत्सप्तमारंभे शून्यं ॥ अतोऽनुपातः यदि राशिषट्कांशैः १८० पूर्णबलं ३० लभ्य
ते तदेष्टेन किमिति ॥ अत्र गुणहारयोस्त्रिंशतापवर्तिते गुणस्थाने रूपं भाजकस्थाने
षडित्युपपन्नं ॥ एवमधिमित्रगृहे पूर्णबलं २० ॥ अधिमित्रगृहसप्तमे शून्यं तत्राधि
मित्रस्वगृहस्थं ॥ अधिमित्रे सप्तमगृहादिशोध्य शेषं षडधिकं चेद्वादशभ्यः शुद्धं नो चेद्यथा
स्थितं तस्यांशाः नवभक्ताः कलाद्यधिमित्रगृहबलं स्यात् ॥ अत्रोपपत्तिः अनुपातेन यदि
राशिषट्कांशैः १८० पूर्णबलं तदेष्टेन किमिति ॥ अत्र गुणहारयोर्विंशतिरपवर्तिते गुण

मिति॥ तत्र स्थानबलेशविशेषपंचवर्गीचक्रसूचनमुक्तं कुत्थयोगे समरसिंहेन।
सबली स्वगृहे नैराशिके हद्दोद्रेष्काणमुशल्लहेषु वा रेखवट इति॥ एतत्स्पष्टगणितपूर्वक
मुक्तं। ताजिकमुक्तावल्यां। स्वाधीशादौ तर्कवेदाग्निनेत्ररूपाढ्यानि स्वगृहे कीद्व
तानि। तुंगे वेदाग्न्यश्विन स्तत्तदर्द्धे हद्दे रामाद्वीन दृक्कीणः स्युः। त्रैराश्य द्वौ तद
र्द्धिकानि त्रैराश्यपद्वंस्यां मुशल्लाहसंज्ञे। यद्वा स्वक्षारातिषु द्वादशांशाः गेहा
द्यंगा ध्याग्निदस्रैर्दवश्च। रामाश्च वह्नीनेत्रचंद्रार्द्धिकानि चंद्रार्द्धांशारूपपूर्वाः क्रमे
ण। रेखवटं शुभसमस्तं स्वादिगृहाद्यैर्भार्द्धं न्यत्र कल्प्यानुपातः॥ अनिष्टादीयह
दि भ्यो बलं यदि हसाधितं। तत्राहस्थानि निघ्नं तत्वं षष्टिभक्तं स्फुटं भवेदिति। अत्र

पंचधामैत्र्याबलविभागं

| ६ | ४ | ३ | २ | १ | ग्र | |
|---|---|---|---|---|---|---|
| ४ | ३ | २ | १ | ११ | मि | |
| ३ | २ | १ | ११ | १ | मित्र | |
| २ | १ | ११ | १ | ऽ= | सम | |
| १ | ११ | १ | ऽ= | ऽ− | श | |
| ११ | १ | ऽ= | ऽ− | ऽ− | ऽश | |

तर्कवेदाद्यंकानि द्वादशांशा घ्नता निरूपा
केवलं भवति॥ अथात्र स्वगृहे पूर्णाव
ले ---- स्वगृहनवभागः इत्युक्तेः॥ स्व

| ग्र | उ | ह | त्रे | मु |
|---|---|---|---|---|
| ६ | ४ | ३ | २ | १ |
| ४ | ३ | २ | १ | ११ |
| ३ | २ | १ | ११ | १ |

यद्धामैत्रीचु

३५

वलोग्रहस्माद्वकान्नुमानेनचमध्यमाद्दीनित्यलमत्तिप्रसंगेन।अथदशाफलज्ञा
नार्थंपंचविंशोपकान्यूनवलोनष्टवलःपंचविंशोपकात्मकवलःस्वल्पवलः।पंचा
धिकवलोमध्यवलः॥दशाधिवलःपूर्णवलः।वर्षेशफलज्ञानार्थंषट्विंशोपकात्म
कपेलाहीनवलः॥षड्विंशोपकाधिकवलोमध्यवलः।द्वादशविंशोपकात्मकवलः
पूर्णवलः॥एतत्स्पष्टमुक्तंहिल्लाजेन॥पंचविंशोपकान्न्यूनवलोनष्टवलोग्रहः।पं
चविंशोपकवलोहीनवीर्यःप्रकीर्तितः॥पंचाधिकवलोमध्यवलःसंपूर्णवीर्यकः॥
दशाधिकवलोद्दशफलंज्ञेयंत्रिभागतः॥इतिसामान्यपंचवर्गीफलसाधनं॥अथ
यरवत्तखुत्तरिवंदकादिसमरसिंहादिसंमतंस्थानदिक्कालनिसर्गचेष्टाद्दग्वलं
निरूप्यते॥उक्तंचसमरसिंहेन॥सामान्यवलंमिहोक्तेविशेषमवलोक्यफलमुह्य

३५

नवांशवानिपूर्णानिनसंभवतिःयतःश्राद्दिनाःघडंशाकेन्यायेणावुधहद्दा॥
अंत्तिमस्तिभागेवुधेद्रेक्काणा॥अंत्तिमसंशत्रयेनवांशःयदिकेन्यांतिमनवां
शागस्वेत्त॥नदाश्वगहेद्रेक्काणास्वनवांशवलानिसंपूर्णांन्यायांतिपरत्वेकंसं
धित्त्सतोपरंप्राच्यवेत्तेइति॥न्यायादुच्चवलंकिंचिन्न्यूनं॥हद्दादिवलमपिनिःस
दिग्रेहसत्वान्न्यूनमतःपरनंवलंयथाकथंचिदष्टादशविंशोपकात्मकंवलं
नविंशति॥विंशोपकात्मकंवलं॥अन्येषांतुस्वगृहाच्चयोभेदाद्विंशतिविंशोप
केन्यूनेमेववववलंस्यात्त॥अत्रकेचित्पंचवर्गीद्वादशवर्गीहर्षस्थानवलानीने
कंत्रिभक्तंयदिविंशतिविंशोपकमितिंस्यात्तदापूर्णावलीग्रहोऽस्तयः॥उक्तंचयाद
वेन॥श्रीसूर्यवर्गीकिलपंचवर्गीस्थानाहयवीर्यैक्यमथाग्निभक्तं॥चेद्विंशतिःपूर्णा

३८

कावलो मित्रित्रिदशाधिके वर्लेर्वली शरालयकेन्यवीर्यकरमिति। अत्रवामनेन लग्नस्यापिपंचवर्गी कार्येत्युक्तं॥ स्वोच्चनवांशकेहदागृहंद्रेष्काणएवच॥ सलग्नखेचराणांतु ज्ञेयेयंपंचवर्गिका इति॥ अथवर्षेशदशाधीशावलादिनिर्णयार्थंविशोपकविभागेनन्नष्टवलादिलक्षणाम् तेनाजिकसारे॥ वाहोनेष्टवलोग्रहो दशमितेमध्योविंशोपैस्तथा॥ अष्टोघस्मिते: १५ सुरवार्थ जनकः प्रोक्तः स्वयदस्तेर्मवेदिति॥ ननुविंशतिविशोपकात्मकंवलकस्यापिग्रहस्यनायाति॥ त्रैयाहि। मेषस्थसूर्यस्योच्चवलादियद्यपिसमायाति। तथापिगृहत्वाभावान्मित्रसमशत्रुगृहा दिभेदकृतवलतारतम्येनावश्यन्यूनतासार्द्धद्वयविशोपकमिताभवत्येव। एवंसतिसार्द्धा: सप्त दशाविंशोपकावलं। सिंहस्थसूर्यस्यस्वगृहवलंयद्यपिसमायाति॥ तथाप्युच्चराशेरभावादुच्च वलस्यन्युनतायां षोडशविंशोपकावलंस्यान्नतुविंशतिविंशोपकात्मकं

| स्व | अमि | मि | स | श | अश | पंचधा | |
|---|---|---|---|---|---|---|---|
| ३० | २२ ३० | १५ ० | ७ ३० | ३ ४५ | १ ५२ | गृह | |
| १५ ० | ११ १५ | ७ ३० | ३ ४५ | १ ५२ | ५६ | हद्दा | |
| १० ० | ७ ३० | ५ ० | २ ३० | १ १५ | ३७ | द्रेष्का | |
| ५ ० | ३ ४५ | ३०२ | १ ५२ | ३७ | १८ | नवा | |

अथवुधस्यकन्यायांपंचदशांशस्य गृहवलंस्वोच्चंचपूर्णंयद्यपिसमा यातितथापितथापिहद्दाद्रेष्काण

| स्व | मि | श | त्रिधा |
|---|---|---|---|
| ३० ० | १५ ० | ७ ३० | गृ |
| १५ ० | ७ ३० | ३ ४५ | ह |
| १० ० | ५ ० | २ ३० | द्रे |
| ५ ० | २ ३० | १ १५ | न |

३८

वानेनेन। नीचादिनोग्रह षड्बाधिकामंडलशोधितः। शेषस्यांशादेनभक्ता वलमुच्चस्य जायते॥ अथाधिमित्रमित्रसमशत्रुअधीशत्रुरूपमैत्रीचक्रेवलविभागाउक्तास्ता जिकस्ति लोके।
उक्ताकलाः स्वर्गगते ८ ग्रहेंद्र प्रत्येकवर्गेत्वधिमित्रगेहे। स्वाद्यंशशांहीनाहितनेगेहसंस्थेस्वा
र्द्धोनितास्वाधिवलवत्रयोना॥ समर्क्षेगे शत्रुगृहोपयातेनिजाष्ट.मांसप्रमितंवलंस्यात्॥ अ
धिद्विषड्डाय गतस्वकीयेनृपांशलिप्ताइतिवर्गवीर्ये॥ यथागतंतेगववलंतुतेनसमन्वितं
वर्गवलंवलंस्यात्॥ मित्रशत्रुरूपमैत्रीचक्रेवलमुक्तंपद्धतो॥ निजमित्रारिभेत्रिंशत्तिथ्यः
सार्द्धाद्रयोवलंहद्दनेत्तलं। त्र्यंशोद्रेष्काणेशरसोशकइति। ग्रंशेशनवांशे। एतत्स्पष्ट.मुक्तंताजि
कसारे। त्रिंशांशानिजभेस्वमित्रभवनेप्रस्त्रांशकाशत्रुभे॥ सार्द्धासमभवला १।३० स्वरवाग्नि
लवकेभागाकलुपंचेद्दवः॥ त्रिंशांशानिजमित्रभेनगलवासार्द्धा १।३० कृताःशत्रुभे॥ पादोना ३।४५
स्वगृहांशकेदशलवा १० वाणांशकामित्रगे॥ द्रेष्काणासदलायमा २।३० स्वरिगतेनंदांशके
स्वशाराः ५ नंदांशेति.नमित्रगेयमलवाः सार्द्धास्वशैत्तदलमिति॥ तदेकसूर्यभागकाद्यमारा

३३

र्वीदवः सततमिति एतेदिनरात्रीविभागोक्ताः मेषराशिकेध्वरावर्षसार्धंनिवेतुलसंक्रात्रे व
र्षेशार्यदिननिशाविभागोक्तास्त्रिराशिपाः इति तस्मादत्तत्र पूर्वोक्तानवांशेशा एव मुशल्लहेशाः
उक्तंसुधानिधौ मुशल्लहंनवांशंचकथितंताजिकेमतेइति ताजिकतिलकेपि मुशल्लहेशाः
स्युनवांशनाथाः प्रोक्तासदाखिंदकरोमकाद्यैरिति ताजिकमुक्तावल्यामपि मुशल्लहे
शानवमांशपाश्च जगुर्नतिखिंदकरास्त्रविज्ञाइति ॥ अथपंचवर्गीफलमुक्तंयादवेन
स्वकीयगेहादिभवाभ्रभाः स्युस्तापात्रिजाताविपरीतभावाः मित्रादिजामध्यफलेषु
वर्गोविशेषवीर्यानयनंब्रुवेहं ॥ अथपूर्वंमहबलज्ञानार्थस्थानान्युक्तानि इदानींकस्मिं
स्थानेकियद्बलमुक्तंमहत्ताभरणे त्रिंशतस्वभेविंशतिरुच्चगेस्यात्तिथिः स्वहद्देदशाकं
दकाले नवांशकेपंचभवंत्यशीतिः एवंयुगाप्रविशोपकाः स्युरिति ॥ अथमित्रसमश
त्रुरूपेमैत्रीचक्रेबलविभागाउक्ताः संज्ञातंत्रे । स्वस्वाधिकारात्तबलंसुहृद्भ। पादोनमर्द्धंस
मभेरिभेंघ्रिः एवंसमानीयबलंतदैक्यंवेदाह्वतंहीनबलंशरोनइति ॥ उच्चबलानयनमुक्तं

३३

यदृकाणराशिः पंचयुक्तो जातो नृग्रः १ एवं सर्वत्र मीनराशो द्वियुतसप्तनष्टप्रथमदृकाणेश
शनिर्द्वितीये गुरुः तृतीयराशिपंचयुते सप्तनष्टे शेषं ३ जातो दृकाणेशभौम इति। अथ मुश
ल्लह उक्ता। ताजिकरत्नमालायां। मुशल्लहाख्याः क्रियनक्रजूककुलीरपूर्वाः क्रियपूर्व
कारामिति। एतत्स्पष्टनाह। यादवसूरिः॥ अजधनुर्हरयोजमुखामतास्त्वलिकुलीरनवा
म्नकुलीरनः घटमुखाघटयुग्मघटामतामृगवृषेणदर्शम
करादय इति। अथ ताजिकभूषणे ताजिकसारादौ मुशल्ल
हे शाअन्यथैवोक्ताः॥ रवीज्यमंदाः सितचंद्रभौमाः शनिःस
जीवाः कविभौमचंद्राः॥ मुशल्लहे शा अजतो मेषाद्या भ्रगु
हरादक्रिनिपिहृयार्कीति॥ नैनद्रम्य। यनः समरक्षिहेनैव
र्षेशानिर्णयार्थं त्रैराशिके शाउक्तानतु मुशल्लहेशाः मेषा
दिचतुस्त्रैराशिके श्वराः॥ रविसितार्कि भृगवाह्निः। गुरुशशिबुधभौमानिशिशनिकुजगु

| स्वा | मि | स | श· | |
|---|---|---|---|---|
| ३० | २२ ३० | १५ ० | ७ ३० | स्वर्क्ष |
| १५० | ११ १५ | ७ ३० | ३ ४५ | हद्दा |
| १० | ७ ३० | ५ ० | २ ३० | द्रेष्का |
| ५ | ३ ४५ | २ ३० | १ १५ | मुस |

ग्वराणां॥ सिंहेंगभूतागद्रिरसांगभागादेवेज्यशुक्रार्किबुधारकृद्वाः॥ स्त्रियांनगांशाद्वि
नगाद्रिभागाः सौम्याशनाजीवकुजार्किनाथाः॥ तुलेरसाष्टाद्रिनगाद्रिभागाकोणां
शेजीवास्फुजिद्दार नाथाः॥ कीटेनगाष्टाष्टशरांगभागाः भौमास्फुजिज्ज्ञेज्यशनैश्चरा
णां॥ [illegible] चापरवीषुबुधिपंचवेदाजीवास्फु
जिद्भारशनैश्चराणां॥ मृगेनगाष्टयुगाष्टुनीनांसौम्यज्यशुक्रार्किकुजेशहद्वाः॥ कुंभे
नगांगाद्रिशरेषुभागाज्ञशुक्रजीवारशनैश्चराणां॥ मीनेर्कवेदानलनंदपक्षाःसित
ज्यसौम्यारशनैश्चराणां॥ अत्रत्रैराशिकशाठकास्ताजिकालंकारे॥ मेषभौमार्केशुक्रानि
दबुधशनयःस्युर्वृषेयुग्मराशौदेवेज्यक्ष्माजसूर्याःसितबुधशशिनःकर्कटेसंप्रदिष्टाः
सिंहेनंदेज्यभौमाःरविसितशशिजाःस्युर्युवत्यांतुलायांचंद्रार्कीज्यास्तथालोकुजरवि
कवयोशंदुनंदाश्चचापे॥ मकरेगुरुभौमपद्मनीशांसितविच्चंद्रमसोघटेनिरुक्ता॥ ॥ ॥

६

२३

अंतरं राशिपूर्वकं। तद्युक्तार्को भवेत्तया हकसंक्रांतिप फलं॥२॥ यद्वा तयोरंतरं संक्र
मार्कभं स्थाप्यं तदंशा महन्मायये नगुणा त्रिंशत्या विहृता दिनानि तत्संक्रमेतैः दिव
सैः फलं स्यात्॥ अनयोस्त्रयोजनं जीर्णता जिके॥ सहमेशः स्फुट दृष्ट्या पश्यति। सहमं
तदा बलं तस्य। सहमस्यैव प्राप्ति स्फुट किंचिन्नेरामकः प्राह ति॥ सौम्यगोल धनं प्रोक्तं
याम्यगोले न दन्यथेति॥ ग्रह सहमानयनं॥ समरसिंहटीकायां॥ ज्योतिर्विद्भिरुक्तं
ग्रहमयस्य ग्रहांत्ते शोध्य लग्नं योज्य ग्रह सहमं भवति॥ एवं मु थहा राशि संयोगा
न्मुथहा सहमं भवति। उक्तं च। मुथहा राशि संयोगान्मु थहा सहमं च वदंति॥ [illegible]
त्र सहमस्य सहमाधीशस्य सबलत्वे ग्रहयोगाच्छुभं वा फलं [illegible] वि क[illegible]स्या न्निर्बल [illegible]
दस्य न्यूनं स्यादिति ज्ञेयं। अत्र किंचिद्विशेष विचारः॥ [illegible] निसह [illegible]
नामशुभफल जिज्ञासार्थमभिहितानि॥ तत्र यस्य जन्मपत्र [illegible] स्या [illegible]
भवति॥ अथेदानीं तदायव्यानुर्जन्मपत्रा भाव स्वदीय [illegible] भाग [illegible] स्यै

मुक्तं रोमकताजके । लंकोदस्य भुक्तांशाः स्वोदयस्पत्तथाहृता ॥ सहमांशैर्द्वयोरैक्यं
दशभक्तं दलीकृतं । सौम्यगोले धनं प्रोक्तं याम्यगोले तदन्यथेति ॥ एतत्स्पष्टमुक्तं वि
नायकनाऽजके वक्ष्ये सहमस्वद्धानां स्पष्टीकरणमुत्तमं ॥ यस्मिन्नराशौ तु सहमं तत्लं
कोदयमानकं ॥ विभजेद्दशकैर्लब्धं पृथगेवं निधापयेत् ॥ तथैव निजदेशोत्थमु
दयं प्राप्तकं च यत् ॥ तत्पूर्वलब्धं संयुक्तं नरवभक्तं दिवादिकं ॥ तद्धनं सौम्यगोलस्थस
हमे याम्यगे ऋणं ॥ अतीव सहमे स्पष्टं जायते गणिकोत्तम ॥ सहमस्पष्टीकरणं मुक्तं
रोमकेन ॥ लंकोदयस्य भुक्तांशाः स्वोदयस्पत्तथाहृताः ॥ तदैक्यं नरवभिर्भक्तं फलं भ
शादिकं भवेत् ॥ सौम्यगोले धनं प्रोक्तं याम्यगोले तदन्यथेति । अनयोः प्रयोजनं ज्ञी
तानाजिके । यादवः ॥ नक्षोदयेन पुरान्त्रहृच्छा वेत्स्वाभिमानासन्युते गेहगेहकनाथ
याहि विवरं कार्यं च गतं पततः ॥ समर्दास्य निजोदयेन विभजेत्स्वाभ्यास्निनिभिर्यत्फलं ॥
मासाद्यं च भवेत्तदादेक्रमतिमानिष्टत्वनिष्टं तथा ॥ १ ॥ सहमसहमेश्वरयोः कार्यवा

निचिकीर्षितानि संति। एवं पत्न्यादीनां भ्रात्रादि सहमानि चिकीर्षितानि संति। कथं ते
षां निष्पत्तिरिति चेदुच्यते। दुःस्वभावस्य शुभाशुभफलजिज्ञासा भीष्टा स एव भावो लग्ने
कल्प्यः॥ सूर्यादि ग्रहास्तु यथास्थित एव मंतव्याः न च सूर्यो न चंद्रो न्विमन्द्रिलग्न मि
त्या युक्त प्रकारेण पुण्यादि सहमं साध्यं। यत्र पुनर्भ्रात्रादेः प्रसूति सहमानयने षष्ठभा
वादि योगस्त्रिकीर्षितस्तत्र भ्रात्रादि भावाद्यत्षष्ठादि भावस्तं क्षेपे दिति॥ अन्यलग्न
स्थाने भ्रात्रादि सहमं योज्यं। षष्ठ भावादि योग पंचराशि युक्तं सत्सहमं योग्यं विधेयः॥
नेदनत्स्पष्टं युक्तो मुक्तावल्यां। अभीष्टसया निशुभाशुभार्थं पित्रादिकानां विद्धी
मान्॥ प्रोक्त प्रकारैः स्ततनुवत्स्वस्य संयोजने तिगुरोर्मतं तत्। एवं तत्तद्भावस्यापि पि
त्रादीनां मरण सहममपि साध्यं। यथा मृतिरष्टमतो दिं दु विशोध्याक्तवदा क्रियोगादि
ति॥ अत्र हि तत्तद्भावेशात्तत्सहमं वा लग्नं प्रकल्प्य तत्स्वस्माग्रवद्भावाज्ञानीयचंद्रभि
दानामानीता य[illegible] विशोध्य शनियोगस्सति मरण सहमं पित्रादेः स्यात्। एतद्वप्य
तं तत्रैव। पित्रादि निरिष्टसहमैते भ्योष्टम भावत इति॥ एवमेकस्मादेव वर्षलग्न।

येनेकानि। सहमानि भावंती त्यलमंति प्रसंगेन॥ अथ सहमानां फलानि॥ तत्र सह
माधीशवलित्वात्तित्ववलक्षणा मुक्तो समरसिंहेन॥ स्वगेहोच्चत्रयं शुभैरा शिकगतानां॥
प्राक्प्राक्स्थानेऽवान्यथान्तरस्थानगोहिनः। यस्यवह्वो धिकारास्तद्वलमन्व
यमुदयदृष्टेश्चवह्वधिकारापियदानवाक्ष्यतेलग्नमस्थेनवलेस्यात्॥ स्वल्पाधिकार
युक्तो विलानदृशा। वलीखेटः॥ दिवसेचवर्षलग्नेदिनखेचराणां निशागतेन्येषां। वलि
मधिकंस्वस्थानेचभनेरभेभमन्यथानुभूनमिति॥ दिनखेटाः पुंग्रहाः अन्येषां स्त्री
ग्रहाणामिति। अथ सहमस्यवलावलमुक्तारामकेन। स्वस्वामिनायुतंसौम्यखेटैः सम
युत्तवीक्षितं भवेद्वलयुतंस्वामीवलवान्परूपवान्भवेत्। विपर्ययेनिर्वलत्वमष्टमाधि
पसंयुक्तं। क्रूरैरथशालसहितंतत्फलंनैवहायने। सहमस्वामीपतिते ८।१२ भवनेरिष्टंकरो
त्यविशालं सहमंशुभयुक्तदृष्टं सहमारिष्टंविनाशयतीति। यादवापि॥ स्वपतिमित्रशु
भेक्षितसंयुतं सहमंशुभफलनायभुदिरितं। वलिनिजार्थकरंयदिवान्यथाक्षयकरं ॥ १५
भवनंचावचिंतयेदिति॥ ननुबहूनांवर्षप्रवेशपुरणपाक्रराज्यगजादिसहमानांतद

धिपानांत्र सवलात्वंहृशपतेश्वरंनुनत्फलंतेषांनभवति ॥ इतिचेदुच्यते । प्रथमजन्मनि
श्रागुक्तरीत्यासर्वाशिसहमानिसाध्यानित्ततःस्वामिनोवलाविवेकःसहमस्यापिव
लावलविवेकंविधाययेषांसहमानांसर्वप्रकारेणसवलत्वंतान्यववर्षविचारणी
यानि ॥ उक्तंचसंज्ञातंत्रे । आदौजन्मनिसर्वेषांसहमानांवलावलं ॥ विमृश्यसंभवो
येषांतानिवर्षेविचारयेत् ॥ अथपापसहमग्रहसंवंधेनयुतिदृष्ट्योःफलंसंज्ञातंत्रे ॥
पापयुक्तशुभदृष्टंचेदशुभंप्राक्ततःशुभं । शुभयुक्तंपापदृष्टंप्रागेवशुभमसत्परं ॥
पापयुक्तशुभदृष्टंचेदशुभंप्राक्ततःशुभं । शुभयुक्तंपापदृष्टंप्रागेवशुभमसत्परं ॥
यत्रवर्षस्यपक्षमासास्वंत्रिभागद्वयंप्रकल्प्ययुतिदृष्टिफलयोःकालभेदःकल्प्य
नः ॥ लग्नात्ययष्टाष्टरिःफ१२ धर्मभाग्ययशोहरं ॥ शुभस्वामीदृशाप्रांतेसुखध
मोदिसंभवः ॥ रन्ध्रेषष्ठाष्टरिःस्फस्थ६।८।१२ मंत्रेपापहमंयुक्तः पुण्यधर्मायशो
रव्ययुग्मपत्योदग्धेफलंतथा ॥ सहमाराय रिवलानीत्थंस्वनेत्वावर्षेचचिंतयेत् ॥ शुभयोगे
दशाद्यौरव्ययपत्स्वीर्यानुसारतः ॥ दारिद्र्यमनिमाद्यारिकतिष्कृतौविपर्ययइति ॥

१५

पूर्वोक्तप्रकारेणादारिष्ट्यादिसहमानितदधिपानिचबलयुक्तानितदातत्संबं
धिदुःखंवक्तव्यं।तेषांनिर्बलत्वेशत्र्वादिनातत्संबंधिसुखमित्यर्थः॥जातिता
जिके॥एवंसमस्तसहमेशुभयुतदृष्टेचमुथशिलेकृतेपुंसां।ज्योतिर्विद्भिस्त्रि
न्यशुभान्शुभंतस्यतद्विषयमिति॥समरसिंहः॥जन्मनिचवर्षलग्नेसहमान्य
खिलानिवीक्ष्यफलमूहंवर्षेश्वरोयस्मिन्स्थितस्तदातत्फलंदायीति।एवंसा
मान्यतःसर्वसहमविचारःकर्तव्येति।अथपुण्यादिसहमानांविशेषफलवि
विचारोराजीर्णनवीनादिनानाग्रंथेभ्योलिख्यते॥तत्रादौपुण्यसहमविचारः॥ १५
यस्याब्देपुण्यसहमंशुभंसोब्दःशुभावहः॥अनिष्टेस्मिन्शुभोनेतिपुण्यमादौ
विचिंतयेत्॥सबलेपुण्यसहमेधर्मसिद्धिर्धनागमः।शुभस्वामीक्षितयुतेवित्त
येवित्तयंविदुः॥सबार्येपुण्यसहमेद्रव्यापापस्तुनान्यथा॥अन्यानपिसंवीक्ष्या

त्वोत्कंबूलंमध्यमाधमं॥८॥अथसमोत्तमकंबूललक्षणम्॥इंदुपदोनःस्वर्क्षोच्चस्थितेनाप्युत
मंतु तत्॥अत्रपदोनत्वंद्विविधंएकेनावक्रूहाणांसमगृहस्वगृहहद्दासमद्रेष्काणसमनवांशसम
नत्वं॥द्वितीयंसूक्ष्मेप्रतिविकलारूपेसमगृहहद्दाद्रेष्काणनवांशानांमादौप्रोतेवावस्थितत्वमि
तिटीकाकृत्॥उदाहरणं॥धनलाभाभिधेयप्रश्नेतुलालग्नंचभार्गवः॥तुलायांतगभौमश्चधने गा४



मध्यमोत्तम मध्यममध्यम मध्यमसमक मध्यमाधमं॥

शोमकरेकुजः॥नवांशोमिथुनेत्वं
द्रोज्ञहद्दायांशारांशकः॥इंदोःस
मोज्ञःकंबूलेयोगेप्रोक्तंसमोत्तमं॥
अथसममध्यमकंबूललक्षणं॥
स्वहद्दादिगतेनापिपूर्ववन्मध्य
मुच्यते॥अत्रापिइंदुपदोनइत्य
नुवर्तिते॥उदाहरणं॥धनप्रश्नेतुलालग्नेऽर्कःसिंहेदशांशकः॥स्वहद्दायांचमिथुनेसमःशुक्रस्य

हद्दगः॥ विधुर्दशांशे शोयोगेस्मात्वंमूलंसममध्यमं॥१०॥ अथसमसमकंमूललक्षणं॥ पादोने नापिमध्यंस्यादिनियुक्तंप्रतायते॥ अत्रेंदुः यदोनइत्यनुवर्त्तते॥ पदोनेनद्रेष्काणादिसंस्थि स्थेनलग्नेनशेनकार्यंशेनच॥ उदाहरणं॥ द्वितीयप्रश्नेमेषलग्नेभौमःसिंहेधनाधिपःमृगघटे विधुर्ज्ञकेत्रयस्वामीदिगंशकाः॥ द्रेष्काणांसंधोसंस्थितास्जानांस्वामीपदोनिताः॥ समंसमंच

का मूलं प्रोक्तं तादृस्यं श्री लतः॥ अथसमाधमकंमू ललक्षणं॥ नीचारिस्थे नेत्यशोले॥ धमंकंमूलमु च्यते॥ इंदुः पदोनइत्यनु वर्त्तते॥ उदाहरणं॥ पंचप्रश्नेयुग्मल



समोत्तमकुंडली॥ समोत्तमकुंडली॥ समसमधमकुंडली॥ समसमनकुंडली॥ समाधमकुंडली॥

ग्नेबुधोमानिनगांशकः॥ सुतेशःकन्यकायांचदशांशेनीचगोभृगुः॥ समस्पष्टेद्रेष्का

ोचापे चंद्रांशरांशकः॥ त्रयाराः॥ मित्यंशा लत्वात्कं दूलं च समाधमं॥ १२॥ अथाधमो
त्तमकेंदूललक्षणं॥ नीचशत्रुभगश्चंद्रः स्वभोच्चस्थेस्यशालतः॥ अधमोत्तमकेंदूलमि
ति॥ उदाहरणं॥ सुखप्रश्ने सिंहलग्ने रविः सप्तांशकः क्रिये॥ सुखेसामकेरमैनोनंदां
शेवृश्चिके शशी॥ स्वांश स्वमयाणांयोगेनुकेंदूलं मध्यमोत्तमं॥ १३॥ अथाधममध्यमके
दूललक्षणं॥ स्वहद्दादिगतेनचेत्॥ इत्यशालीकेंदूलं न दूच्यते॥ अधममध्यमं॥ अत्र नी
चशत्रुभगश्चंद्र इत्यनुवर्त्तते॥ उदाहरणं॥ पुत्रप्रश्नेगनालग्ने स्वहद्दायां मृगे बुधः॥ रा
मांशः पुत्रपोमंदः स्वहद्दायांशरांशकः॥ मीनेवृश्चिकगश्चंद्र
स्वांश श्वेपांतुयोगतः॥ प्रोक्तं चाधममध्यं तु केंदूलं शास्त्रवेदिभिः
अथाधमसमकेंदूललक्षणं॥ पद्मेनेनेत्थशाली चेत्कंदूलं
मध्यमं स्मृतं॥ अत्र नीचशत्रुभगश्चंद्र इत्यनुवर्त्तते॥ उदाह
रणं॥



वृषलग्नराज्यलाभप्रश्ने सिंह[illegible]गतः सितः॥ समस्यार्किस्य गेहे नृसरांशो राज्यप शनिः॥
वृषे समस्य शुक्रस्य गेहे रवेंदुमित्रो शक्रः॥ चंद्रो वृश्चिकगस्त्र्यंशस्त्र्यधाराम् इत्यशालतः॥
कंबूलं चाधमसमं प्रोक्तं ताजिकवेदिभिः॥१५॥ अथाधमाधमकंबूललक्षणं॥ नीचा
रिभस्थखेटेन नीचारिभगतः शशी॥ इत्यशाली कंबूलं तदधमाधममुच्यते॥ उदा
हरणं॥ पुत्रप्रश्ने धनुर्लग्नं मृगे वस्वंशगो गुरुः॥ कर्के सुताधिपो भौमः पंचांशो वृश्चिके
शशी॥ अशस्त्र्याणां योगेन तु कंबूलं मध्यमाधमं॥१६॥ कंबूले विशेषः कसंज्ञा तत्रे॥



अथ धमसमं॥



अथ धमाधमं॥

लग्नकार्यपयोरित्थशाले त्रैको स्तिनाचगः॥ स्वदोदिप
दहीनोन्योऽत्रेंदुः कंबूलयोगकृत्॥ तत्रकार्यं लभ्यतारे
यायथाजात्यन्यमर्थयन्॥ अन्यजातिः पुमानर्थं तथै
तत्कवयो विदुरिति॥१६॥ अथ कंबूलयोगे विशेषका

५९

नयनं।। निशेशलग्नेश्वरयो र्निशेशकार्येशयोः कार्यप्रकृतयोश्च।। विंशोपकाः संमि
लिताश्चिनक्ताः विंशोपकोस्तकथितो कंबूलं।। इति श्रीरामदेवज्ञगुरुपदाब्जभक्तिनः।। कंबू
लं भेदसहितं वदामदूरा निर्मितं।। इति कंबूलं।। अथ गैरकंबूलं।। तत्र तल्लक्षणमाह या
दवः।। यो नेत्थशालेस्तु नयारदृष्टिः स्थानेचरन्नेशीततरुचिस्तयोस्तु।। प्रविश्य कस्यापि गृ
हं न योऽत्र कुर्यात्सुनि गैरिकंबूलमुक्तं।। वदंति चैतत्फलनं समानं कंबूलयोगस्य तथैव भेदः
तथा हि गेहं न निजोच्चकं च यदा तदानिष्टफलं कंबूलं।। तयोर्लग्नेशकार्येशयोर्युनिमित्थ
शालं ग्रहस्य चेद्रन्थशालावस्थितस्य ग्रहस्य गृहमुच्चं वा न भवति।। तदारिष्टमित्यर्थः उ
कं च ताजिकालंकारे।। तन्न्वेट गेह तुंगस्थो न स्याद्यदि च चंद्रमाः।। गैरिकंबूलयोगासाव
भद्रः कथितो बुधैः।। अत्रोदाहरणं संज्ञातत्वे।। लप्से सुतमिति प्रश्ने सिंहलग्नं रविः क्रिये
ष्टांशैः सप्तवयः कुंभे भौमोशैरविभिस्तथा।। इत्थशालोत्तितत्रेंदुः कन्यायां च मेशके।। स्व
क्षीदिपदहानस्य नेत्थशालास्य के न चित्।। स सौख्यं योगनशक्तिना न्यदीस्थनेत्थशाल स्तन।।

तेर

६० गैरिकंचूलमन्येन सहायाल्लाभदायकं ॥ इति गैरिकंचूलं ॥ अथ खल्लासरः ॥ तत्र खल्ला
सरयोगलक्षणमाह यादवः ॥ द्वयोरन्यथैकेन च शीघ्रे भानुरदृष्टिमार्गे विचरन्न करोति ॥ नमूथ
शीलं न च संयुतिर्वा खल्लासरः कार्यहरस्तदा स्यात् ॥ अत्र लग्नेशकार्येशयोरपि मुत्थ
शिलाभावो ज्ञेयः इति केचिदाहुः तन्न यतः सर्वे खल्लासरफलं कार्यनाशसंभवः खपुष्पा
दिसमं ॥ तयोरित्थशालेकार्यप्राप्तिसंभवेपि लग्नपाभ्यां चंद्रस्य पुनरित्थशालासंभवान्न कार्य
केनचिन्मेयोगवदिस्यशालफलनाशकः ॥ खल्लासरयोगो ज्ञेयः ॥ इति एनत्यमृतकं नी
ळीताजिके ॥ लग्नेशकार्याधिपयोरित्थशालो न वा युतिः ॥ द्वाभ्यां चंद्रेण नेत्थशाली प्रोक्तः ख

गैरिकंचूलं



ल्लासरोऽत्र शुभः उदाहरणं ॥ तपस्य सुतमिति [illegible] ब्रह्मो सिंहलग्ने रविः क्रिये ॥
विदांशेः सुतपो जीवः कुंभे शे शारसंमितैः ॥ लग्नकार्यपयोरस्ति योगो मुत्थ
शिलाभिधः ॥ अथ कन्यां तिमेशे च विधुर्नेत्थशिला नहि ॥ द्वाभ्यां च तेन नेका ६०
र्यस्य नाशी खल्लासरो मतः ॥ इति खल्लासरः ॥ अथ रद्दः ॥ तत्र रद्दयोग

योगलक्षणं मृत्तां योगसुधानिधौ ॥ वक्रे यातु मणिकराशिगामिना स्वं अप्नेन व्ययरिपु
नाशगामिनां च। केंद्रेण कामिन नभस्त्व थेत्स्य शालेत्तद्र्दं हरतिफलं प्रहर्षिणीयं ॥ अथा




त्र विशेषमुक्तं ताजिकभूषणे। आयो वक्रिमस्थ अवरे वचर अत्र लेंद्रस्थ
मंदेन च मूथशीलं। करोति कार्यं प्रथमं विलंबं पश्चाद्वशं सकलार्थसि
द्धिः। केंद्रस्थितः शीघ्रगतिः करोति चार्वक्रिमस्थेन च मूथशीलं॥ मंदेन
कार्यं प्रथमं च भूत्वा प्रांते विनाशं समुपैत्यवश्यं॥ अत्रोदाहरणं॥ भाग्य
प्रश्ने मेषलग्ने भौम॥ कन्यागतो गुरुः॥ भाग्यपस्तत्र तत्रैव संस्थितो रविमंद
प्रा ३
गो॥ सर्वे दिगंशप्रमिता रहार्यफलं नाकः॥ वातत्त्वलग्ने मीनसंस्थः॥ कुजो मकरगो गुरुः॥
द्वौ दिगंशौ प्रागशुभं शुभं पश्चात्प्रकीर्तितं॥ वातत्त्वलग्ने कर्कसंस्थो भौमो मीनगतो गुरुः॥
द्वौ दिगंशौ प्राक शुभं पश्चादशुभमेव च॥ इति रद्दयोगः॥ अथ दुःफलिकुत्थयोगल

त१

६१ ६

यत्ता(?)नाजिकमूषरी(?)॥ मंदः स्वगेहे यदि वा निजोच्चे त्रैराशिके वापि निजे प्रकुर्यात्॥ योगं चरेणानधिकारिणा चेद्दुःफालिकुत्थः शुभकृन्निरुक्तः॥ योगं मुथशिलाख्यं यद्यधिकाररहितेन शीघ्रेण मुथशिलं कार्यं करं न हि॥ अधिकारसहितेन यद्यवश्यं कार्यं करमिति जीरोटीकाकृत्॥ अथोदाहरणं॥ सुखप्रश्ने मेषलग्ने भौमः सूर्यः शुक्रः क्रियः॥ दिग्गेशुक्रः सुखाधीशो हि भौमः कुंभसंस्थितः॥ द्वयोरत्रेत्थशालत्वात् सुखलाभं विनिर्दिशेत्॥ इति दुःफलीकुत्थयोगः॥ अथ दुत्थोत्थदवीरयोगः॥ तत्र दुत्थोत्थदवीरयोगलक्षणमुक्तं॥ जीर्णं ताजिके॥ लग्नेशकार्याधिपती निर्वीर्यौ योगकारकौ॥ तयोरेकः स्वगेहोच्चादिस्थो नान्यन्न योगकृत्॥ दुत्थदवीरयोगोन्यस



रहयोगफलता॥ प्रागशुभप्रश्ने॥ प्राक्शुभप्रश्नादशुभे॥

शकः छम:



दुःफालिकुत्थः

६१

हायात्कार्यकारकः॥ अथवा तोयग्रहो स्वर्क्षादिगो शीघ्रगत्तीनयोः॥ निर्वलेन च मंदेन मु
थशीलकरोंतयाः दुत्थदवीरयोगान्यसाहाया त्कार्यकारकः॥ तयोर्लग्नेशकार्येशयोरुप
हरणं॥ जायाप्रश्ने सिंहलग्ने तुलासंस्थो शुक्रे रविः॥ शनि मेषनंदभागः कुजो मेषे रसांशकः॥
निर्वलो कार्यलग्नेशा वित्थशालकरोंतयोः॥ शनिः स्वग्रहसंस्थेन भौमेन नमुथशीलकृत्र॥
जायालाभोन्यसाहायादुःत्थदवीरयोगके॥ वा तलग्ने सूर्य भौममंदाः पूर्वोक्तवत्स्थिताः॥
मेषे जीव स्वहद्दायां पवीशेः गुरु भूमिजो॥ मदनयोगकर्त्तीशावतो लाभोन्यतः स्मृतः॥ अ
त्र स्वगृहगो भौमः स्वहद्दास्थ्यो गुरुस्तो स्वनीच स्थेन निर्वलेन शनेश्वरे शोत्थशालकरा
वतस्त्रीलाभोन्यतोवाच्यः॥ इति दुत्थोत्थदवीरयोगः॥ अथ तंवीरः॥ तत्र तंवीरयोगल
क्षणामृतंहायनसिंधो॥ लग्नेसकार्याधिपयोर्नयोगेवलीनयो भांतगतोपराय॥
दीप्तांशकैर्वीर्ययुतायदेन्न्यर्क्षेमहोन्यन्नशुभस्तवीरः॥ अत्र लग्नेशकार्येशयोरि
त्थशाला भावत योरेको वली राश्यंतगः॥ अपराय अन्यस्मिन्स्वगृहादिवीर्ययुत्ताया

ग्रिमराशौ भावेत्तयोरेको ॥ वित्थशालद्वारेतयान्तेजोयत्ते ॥ सभुभतंवीरयोगः ॥ उदाह
रणं ॥ सुखप्रश्नेतुलालग्नेद्यंशः कर्केभृगुः शनिः ॥ एकोनत्रिंशदंशश्च कुंभेयोगोन
यनयैहि ॥ मानसंस्थेनगुरुणापंचांशेनेत्थशालवान् ॥ शनिस्तंवीरयोगोयंप्रो
क्तः कार्यकरोवुधैः ॥ इतितंवीरयोगः ॥ अथकुत्थयोगः ॥ तत्रकुत्थयोगलक्षणंता
जिकभूषणे ॥ खेटःस्वीयगृहादिकंटक
अ गतः प्राग्लग्नसंलग्नहक्सद्भिर्दृष्टयुतश्चपा
पयुतिदृक्संवर्जितोभ्युद्गमः ॥ मार्गीकाल
वलान्वितः सवलवान्सम्यक्फलावाप्तिदः
कालज्ञैर्वलवीक्षणायगदितोयोगश्चकु
त्थाभिधः ॥ इतिकुत्थः ॥ अथदुरफयोगः
तत्रदुरफयोगलक्षणंतत्रैव ॥ अस्तंगतो

इत्थोत्थदवीरं ॥ | कुत्थोत्थदवीरं ॥ तंवीरकुंडली ॥



यस्तगतैस्त्वशस्तैर्युतैर्विनोष्टां त्यरिग स्वगेहात्॥ संप्राप्य येगनी चरखगेत्थशाली रा
ड्रास्यपुच्छदुरफाभिधानः॥ संज्ञातंत्रेच॥ चंद्रस्यदुरफे विशेषाक्तः॥ चंद्रसूर्यातृद्वाद
शद्वद्भिकाद्यखंडेनेष्टांत्यानुलाय्या विशेषात्॥ राशीशेना दृष्टमूर्त्तिर्न सर्वेद्दृष्टेजे
यो शून्यपदोनः क्षीणो भांते नो शुभो जन्मकालेप्र छायायां वा चंद्र एवं विचिंत्यः॥ शु
क्ले भौमः कृष्णपक्षे र्कसूनुः सुदृष्ट्येंदुं वीक्षंते नो शुभो सौ॥ अस्यापवादमाह समर
सिंहः॥ दिवसेनुपूर्वपक्षे प्रच्छायां जातके चरविसूनुः॥ नरराशिशो गात्यदोषं वक्रा
दोषं विन्त्ययाकुरुते॥ भौमो रात्रावपरपक्षे स्त्रीराशि संगस्त्वल्पदोषं कुरुते॥ प्रश्नेज
न्मनि चव्यत्ययात्प्रचुरं॥ इति दुरफयोगः॥ एते सर्वे इत्थशालस्यैभेवदा इत्युक्तं या
दवेन तेन विशेषा प्रतिपाद्य मौना निरूपितः॥ षोडशेत्थशालः॥ तथा चतुर्विंशतिभे
दशालीस्यात्केशवश्रक्रगदादिभेदैः॥ अन्यो विशेषस्तत्रैव। यद्यद्भावपतिर्दृशाति

हिनिजंतेजोंगनाथायचेत तत्राप्तिकरोन्ययाहायकर: क्रूर: शुभाद्याप्तिकृत
एवंक्रूरशुभादिवीक्षणवशाज्ज्ञात्वावदेद्बुद्धिमान् भागांतरसंभवे: रविगुणे
स्तत्राप्तिकालतया॥ ॥इतिश्रीबलभद्रकृतौहायनरत्ने षोडशयोगध्याय
स्तृतीय:३ ॥ अथसहमाधिकार: तत्रप्रयोजनमाहयादव। सकलभावफल
समहायतां विदधतेसहमानिसदायत: विधिरिवोद्यमनस्यनरांणांमत: स
हमसन्नयनंविधिवत्स्फुटमिति ॥ अथशास्त्रोपस्थितयसहमानांनामान्युक्ता
निसंख्यातानि पुण्य१गुरु२ज्ञान३यशास्४मित्र५महात्म्य६माशा७ वसम
र्थता८ चभ्राता९ तताग़ौरव:१० राज११ तात१२ माता१३ सुतो१४जीवत१५
मंबु१६ कर्म१७ माघं१८ चमन्मथ१९ कलि२० परत: क्षमाल्ला२१ शास्त्रं२२ स
वंधुसहमं२३ व्ययचंद्रकंच२४ मृत्योश्चसहम२५ परदेश२६ धनान्य२७ दारा२८

स्यादन्यकर्म २९ मवणिक ३० त्वथकार्यसिद्धिः ३१ उद्वाहः ३२ स्तूति ३३ संताप ३४
श्रद्धा ३५ प्रीति ३६ वलं ३७ तनु ३८ जाड्यः ३९ व्यापार ४० सहमं पानीयपतनं ४१ रिपुः ४२ शौ
र्य ४३ पाय ४४ दारिद्र्यत्वं ४५ गुरुता ४६ वुकर्मेव ४७ वंधनं ४८ दुहिता ४९ अश्व ५० पं
चाशत्सहमानि हि। अत्र परदेश सहममेव मार्ग सहमं॥ विवाह सहममेव स्त्री सहमं।
ज्ञान सहममेव विद्या सहमं ज्ञेयं अन्यैरधिकानि सहमान्युक्तानि॥ भार्याख्य ५१ भो
ज्याख्य ५२ मृत्यु ५३ पितृव्य संज्ञं ५४ तथा क्लेश ५५ गमागमौ च ५६ गजाभिधं ५७ सन्म
ति ५८ घातकोप ५९ द्वंद्व ६० चतुष्पदाख्यं ६१ व्यसनं ६२ कृषि श्व ६३ हष्याख्य ६४ मोरवट
क ६५ मन्यका ६६ गं ६७ प्राप्ति ६८ निधि ६९ ज्ञाति ७० ऋणानि ७१ वृद्धिः ७२ आधानः
७३ चैर्याभिध ७४ शैन्यकानि ७५ पंचाद्रि ७५ संख्यान्यखिलानि तानि। प्रोक्तानि पूर्वे
कृपशास्त्र थे थे स्फुटं वदाम्यानयनं यथोक्तमिति॥ ताजिकरत्ने॥ अथ द्यावशसहमं॥

मादवः॥ वपुर्द्दिनभ्रातृसुहृत्सुतं द्विषाद्दारामृतिः पुण्यपदाप्तिकव्ययाः॥ इमानि तु द्वाद
श संमितान्यपि प्रोक्तानि केश्चित्सहमानि सूरिभिः॥२॥ वपुर्वपुर्नाथसमन्वितं वपुर्ध
नं धनेशान्वितधनं शलग्नं॥ सहोद्भवा धीशयुतं सहोद्भवं विलग्नहीनः सहजाभिधानक
ः॥ सुहृत्सुहृन्मूनसुहृत्पतिर्दिवानिशिन्यथानाथकसंयुतोमतः॥ सुतोसुतानाथीशयु
तः सुतोमतो रिपूरिपूनो रिपुधामनायकः॥३॥ गुरोसुरारेरिहयोगकोर्द्दाराधिपद
ाराधिपतिहीनदाराः॥ मृत्युस्तु मृत्यूनितमृत्युनाथः सचेद्दिवानाथयुतः सनाथः॥४॥
भाग्यं च भाग्यपशविहीनभाग्यः पदं पदोनः पदनायकः स्यात्॥ लाभोपि लाभोनितला
भनाथो व्ययो व्ययोनो व्ययभावनाथः॥ अथ सुगमप्रकारेण पुण्यसहमानयनं संज्ञा
तंत्रे॥ सूर्योनचंद्रान्वितमक्षलग्नं वा दर्कयुक्तं निशि पुण्यसंज्ञं शोध्यदो भृद्व्याश्रयमं
तराले लग्नं न चेत्सैकभेन तदुक्तं॥ अस्यार्थः॥ दिवसे वर्षप्रवेशो जन्मकालो वा भवेत्तदा
तात्कालिकस्पष्टलग्ने तात्कालिकस्पष्टसूर्यरहितेन चंद्रमसा समन्वितं कार्यं॥ तन्पुण्य

सहमं भवति ॥ रात्रौ लग्नं स्पष्टचंद्ररहितस्पष्टार्कयुतं पुण्यसहमं स्यात् ॥ अत्र संस्का
रविशेषमुच्यते ॥ शोध्यर्क्षेति ॥ शोध्येन न्यूनः क्रियते यो ग्रहः स शोध्यस्तस्य राशिः
शोध्यर्क्षं यस्मिन् ग्रहे शोध्यो ग्रहः शोध्येन स शुद्ध्याश्रयो ग्रहस्तस्य भं राशिः । अनयो रा
श्यादि ग्रहयोर्मध्ये शोध्यग्रहराश्यादारभ्य शुद्ध्याश्रयग्रहराश्यंशावधिमध्ये चे
ल्लग्नं न स्यात्तदेतत्पुण्यसहममेकराशिसहितं कार्यं ॥ यदि तयोर्मध्ये लग्नं स्यात्तदैकरा
शियुतं न कार्यमिति निर्णयः ॥ अत्र शोध्यर्क्षे शुद्ध्याश्रय सामान्योक्तिर्ग्रहभावसहमाना
मपि ग्रहणार्थं कृता ॥ अत्रोदाहरणं ॥ स्पष्टसूर्यो राश्यादिः ४।८।१० स्पष्टचंद्रो राश्या
दिः ६।१२।१० स्पष्टलग्नं राश्यादिः ८।१० दिने वर्षप्रवेशोऽस्तीत्यतः सूर्यचंद्रमध्ये शो
धितः शेषं २।४।१० लग्नयुतं १०।१४।० सिंहार्कांशादारभ्य तुलाब्ध्यंशावधिमध्ये
नुर्लग्नाभावादेकराशि १ युतं जातं पुण्यसहमं ११।१४।० अथ रात्रौ वर्षप्रवेशे सूर्यः ४
।८।१० चंद्रः ६।१२।१० लग्नं २।१४।० अत्र सूर्यमध्ये चंद्रः शोधितः शेषं ९।२६।० लग्ने

६५ न्युक्तं ॥१०॥ तुला द्वादशांशाशारभ्य सिंहाष्टमांशावधि मिथुनराशिसत्वादेकराशि
योगाभावस्तस्मादिदं नवपुण्यसहमं। अत्रार्थे मूलं समरसिंहः॥ दिवसे दिनपतिभो
ग्यान् शशिभुक्तांशकांश्चसंमील्य। अंतःस्थितराशियुतान् त्रिंशन्यूनेकतः कृत्वा
। यद्यंतरराशिपतनं न भवति लग्नं तदास्य भुक्तांशाः मध्ये देयाः मध्यस्थिते तु भोग्यां
शकाः पात्याः। लग्नाद्द्वितीयभवनात् त्रिंशन्न्यूनेकांशाधिके॥ यत्र विश्राम्यति तत्र
दैविज्ञेयं पुण्यसहममिति॥ नक्तं तु चंद्रभोग्यादृविभुक्तं यावदन्यथा द्यावधि
रिति॥ व्याख्या॥ दिवसे वर्षप्रवेशे सूर्यभोग्यांशान् चंद्रभुक्तांशांश्च संमी
ल्य॥ अंतःस्थित पुनः सूर्याच्चंद्रपर्यंतं यावंतोंतःस्थिता राशयस्ते त्रिंश
न्यूनैकतः कृत्वा योज्याः त्रिंशद्गुणिता राशयो योज्या इत्यर्थः॥ पुनः सूर्य
राशेः सकाशात् चंद्रराशिं यावन्मध्ये लग्नराशिर्न भवति॥ तदान्यलग्नस्य

भुक्तांशाः कृतांशासमूह देष्याः ॥ यदि तयोः शोध्यशोधकयोः राश्यादिकयो

र्मध्यवर्त्तिलग्नं भवति ॥ तदा लग्नभोग्यांशाः प्राक्तनांशमध्ये शोध्याः ॥ ततो ल

ग्नद्वितीयभवनमारभ्य त्रिंशदंशैस्त्रिंशदंशैरेकैकं राशिं विशोध्य यस्मिन्

राश्यादौ विश्रान्तिः ॥ स्यात् तद्रा १ शपा घं पुरुष सहमं ज्ञेयं । रात्रौ चंद्रभोग्यांशाः सू

र्यभुक्तांशैर्मध्यवर्त्तिराशिभिश्च युताः कार्याः ॥ ततोपद्यंतर राशंपन इत्यादि ॥ अ

न्याद्यविधिः कर्त्तवेत्यर्थः ॥ अत्रोदाहरणं ॥ तद्दिने सूर्यभोग्यांशाः २१।५०। चंद्र

भुक्तांशैः २२।१०युताः ३४।० सूर्यचंद्रयोर्मध्ये एक एव राशिस्तस्यांशैः ३० युताः ६४

अयनांशाद्यः सूर्यान चंद्रो जातः ॥ अथ धनुर्लग्नमुभयोर्मध्ये नास्त्यतो लग्नभु

क्तांशकाः १० प्राक्तनांशा ६५ मध्ये योजिताः ७४ एवं धनुर्लग्नस्य संस्कारो जातः ॥ ततो

लग्नाद्द्वितीयभवनं मकरस्तस्मादारभ्य त्रिंशदंशैरेकराशिकल्पनया मकरकुंभयो

रंशाः ६० शोधिताः शेषं १७ मंशादि अत्र मीनलग्नस्यांशाः ३० तन्मध्येन भुक्तंति अतो मीनलग्नेचतुर्दशांशे विश्रांतिर्जाता तस्मादिदं नवपुराणसहमं मीनलग्ने चतुर्दशांशाः ११।१७ मितं संज्ञातं त्वानीतसमं ॥ अथ यरात्रौ चंद्रभोग्यांशाः ७।५० सूर्यभुक्तांशेः ८।१० युताः २६ चंद्रार्कयोरंतस्थराश्यंशः ९ शे २१ युताः २९।६ जातमंतरं नसूर्यः अत्र चंद्रार्कयोर्मध्ये मिथुनलग्नमस्ति तन्नोलग्नभोग्यांशाः १६ आक्रांतांशमध्ये २९।६ शोधिताः शेषं २८।० अंशाद्यं ततो लग्नाद्वितीयं भवनं कर्कस्तमारभ्य नवराश्यंशाः २७० मीनांतं यावत्तदंशसमूहः २८० शोधिताः शेषं १० मेषराशेरंशाः ३० दशमध्येन भुक्तंति अतो मेषदशमांशे विश्रांतिर्जाता अतो ददं नवं १० पुराणसहमं संज्ञातं त्वानीतसहमसमं ॥ अथ संज्ञातं त्रोक्तसैकताकरणोपपत्तिः ॥



नत्र पूर्वैः समरसिंहेन लग्नसंस्कारे यो ध्यशोधकयोर्मध्ये लग्नाभावे लग्नभुक्तां

शाः

कृतांशसमूहे शेष्या ॥ लग्नसत्वेतु लग्नभोग्यांशैः कृतांशसमूहे शेष्या। ध्यापुनर्ल
ग्नाद्द्वितीयभवनात्त्रिंशन्मितत्यक्तः। कृत्वांशौ धनभुक्तांजातकेकोस्तुमे॥ भावखेचर
संयोगेयस्मिन्सहनसा धेनः॥ नत्वान्तस्तत्र संयोज्यं लग्नेराश्यादिकं सदा॥ शोध्यमर्द्ध
शोधनगृहांतरगं न लग्नेसैकं न चेत्तनयुतं वृ धनीलकृद्धः॥ निःशंकतो निजकृतो निजगा
दनूनं व्योमप्रसूनयदिदं प्रतिभाति चित्ते॥ तत्र लग्नभावभुक्तांशसहितांशसमूहे धन
भावात्त्रिंशांशशेष्या धनेन धनभावाद्वसहृतगणना जाता धनभावलग्नभावयोरंतरं
चैकराशिमितं दृष्टमतः सहमे सैकतां कृत्वा लग्नाद्वसहृतगणनानाकालग्नसत्वेतु
भोग्यांशरहिते स्वंशसमूहे धनभावात्पूर्वव्द्धो धनेकृते त्रापि धनभावाद्वगणना
जाता परं तु भोग्यांशशेषा धनेभुक्तांशयाजनेंशशाम्यपूर्वकनेकराश्यपेशानाम्नूनत्वंभ
वति॥ एकराशिहीनो धनभावो लग्नभाव एव भवतीत्यतः सहमे सैकता संस्कारं विनैव
लग्नाद्वसहृगणनाकेस्युपपन्नं सैकतासंस्कारकरणं॥ अत्र केचित् लग्नाद्द्वितीय

६१

भवनादितियंचभ्यंतेपदद्वयस्यपाठंकल्पयित्वायद्यंतरराश्यंतर्न भवति॥लग्नंतद्वा
स्यभुक्तांशानथैदोष्यास्तदेवलग्नाभवनादारभ्यचाग्रिमराश्येशाःशोध्यायदाच
मध्यस्थितेलग्नातस्याऽस्यभोग्यांशानथेशोध्यास्तेयदिद्वितीयभवनादारभ्यचाग्रिम
राश्यशाशोध्याएवंकृतेसतिलग्नस्यवहिःस्थितत्वेनध्यस्थितत्वेवालग्नयोगएव
भवतीत्याहः॥नैतद्रम्यं॥कृषिस्थानेनिषिक्तसमयसिंहवाक्यप्रयत्नतःपाठोवरकल्प
नेनेवनोचितं॥यथकल्पमानेपिपाठेक्रमादिदितिपदाभोवाम्नाभिमतसिद्धिरितिस्यं
ग्रंथकर्तृणांयत्रयत्रयथासंख्यांचिकीर्षितं॥तत्रतत्रक्रमयथासंख्यंयथाक्रमपदा
निप्रयुज्यंते॥यद्वत्गजाश्चैस्त्रिरसैर्विभाजिता।क्रूरांविघ्नासृराशी॥यंयोक्रमादिति
भास्करः॥अतःक्रमाक्तौसत्यवयथोक्तार्थलाभोभवेत्॥क्रमपदाभावेविपरी
तार्थःसंभाव्येत।यथालग्नस्यमध्यगतत्वाभावेसतिद्विजीयभवनादारभ्यशो
धनेलग्नस्यांतर्भूतेसतिलग्नादारभ्यशोधनमित्यर्थत्वात्।अथसमरसिंहस्ययथैव

६१

एवाभिप्रायोभिन्नतस्यात्तद्वायेघंतस्राशपतरीत्यादिपदद्वयोक्तप्रकारगौरवमप
हायप्रथमपद्यकथनानंतरंतत्रराश्यादिलग्नेदत्तप्यमित्येवप्रकारंलाघवात्समर
त्तिं हिब्रूयात्॥ तत्तु नक्षत्र मत्तो लग्न द्वितीय भवना दित्येक मेव पदं जायत इति सि
द्धांतः॥ एतत्स्पष्टमुक्तं जसिंहेन। भोग्यान्हि रवेर शाङ्क्वा विंदो ग्र मेलयेत्। तत
स्तयोरंतश लग्नराशिसंघो शकैर्युतान्॥ स्याच्छुनांतरराशेंपतल्लग्नं तस्यांशकोच्चयेत्।
लग्नभुक्तांशकाः क्षेप्यास्तन्मध्यस्थेप्यवादये॥ लग्नाशपदयभोग्यांशाः पात्याः स्फु
मीगपिंडनः॥ त्रिंशत्कृत्वा धनस्थानां दंशान्प्रसेकशो जना॥ द्विगुणाम्यांतिहितन्नर्सै
स्यात्पूरणपसहनंविघोः॥ भोग्यपादारभ्य विमुक्तेन्नु निश्पन्यो विधिशादिन इति॥ वाम
नेन पित्तसहवानयनेस्पष्टमुक्ते॥ दिने वर्षे विलग्नं चेत्सूर्ये भोग्यांशकास्ततः॥
शनिभुक्तांनशकाः मध्यराशंपशकैर्युतान्॥ एकीकृता ततः प्राग्वत्कृत्वा लग्न
विचारणा॥ रात्रौ वर्षे विलग्नं चेछनि भोग्यांशकास्ततः॥ सूर्यमुक्तांनशकां

६९

अपिंडयेत्प्राग्वदाचरेत् । अशुद्धिः कार्या धनाद्यत्र विश्रांति पितृसद्मन इति ॥
यत्तु नृसिंहनंदने न दिवाकरेण स्वकृतवर्षपद्धतिटीकायां सैकत्तासंस्कारो वा
मनेन नोक्त इत्युक्तं । तन्न तिभ्रमेणाज्ञाताजिकशास्त्रावबोधरूपायां ताजिकनु
क्तौ वक्ष्यामप्युक्तं ॥ एवं दिवा स्यात्रि शिवे परित्यान्नश्वे । ततो दूनितमेष्य भागैः स्वं
सेनवेलञ्जनगतांशयुक्तं गणपथनदीदखिलेपु चैवमिति ॥ यत्तु हस्तामरणेप्युक्तं । दि
वसमानुमो ग्योशानि डुयुक्तांशमेलयेत् ॥ तदंतरालराशेषं च शयुतालग्नं तदंत
रे ॥ यदिनस्यात्तदा सैव्याः भुक्तांशास्त्र सस्यन ध्यगो ॥ पात्या भोग्यपलवास्त्वात्त्रिंशः
त्रिंशच्चैर्योधयेत् ॥ विश्राम्यति गृहे यत्र विज्ञेयं पुण्यपसद्मन इति ॥ स्वाहूतीयमवना
तेयथुनोक्ता प्रथक्सुद्धिस्तथुकार्या धनादितइति ॥ जीर्णताजिके पिस्पष्टमुक्तं । एवं
श्रीशीनताजिककर्तृभिः प्रामाणिकैरुक्तत्वात्केशवदैवज्ञहरिभट्टगणेशदैवज्ञकृत
सैकत्तासंस्कारसहितं । सहमसाधनं न रमणीयम् ॥ अस्मद्गुरूणामेवमतं युक्तिसहमेतो

६८

५१

सूर्यादिकानां स्वगृहं निजोच्चं। पुंस्त्रीखगानां तनुतस्त्र्यंपंच। निशादिनं स्त्रीनरसंज्ञका
नां। पुंनामनिपुंसां वनिता गृहाणि स्त्रीयोगानां च मृदास्पदानि। हर्षास्पदेष्वस्थि ४
विशोपकाश्च पृथक् पृथक् पंच स्युः संवदंति॥ ताजिककल्पलतायां॥ हर्षास्पदे पंच
विशोपकाश्च पृथक् पृथक् प्रोक्ता धियो वदंति॥ एतद्बलं पूर्ववलेन पंचवर्गीभवेत्तान्वि
तमत्र वीर्यं॥ ॥इति श्रीमद्दैवज्ञवर्यपंडितदामोदरात्मजबलिभद्रविरचितहायनर
त्ने दृष्टिसांगवलेष्टकष्टाद्यानयनाधिकारो द्वितीयः॥ अथ षोडशयोगाध्यायः॥ ॥
तत्रयोजनं ताजिककल्पलतायां॥ योगं विना सिद्धिरभीप्सिता नि कस्यापि हृद्वाक्षिश्र
वणादिमानां॥ प्रदर्शयन्ते तः कथयामि योगाः यथा मनीषा गदिता प्रवीणैरिति॥ तत्रेक
वालादिषोडशयोगानां नामान्युक्तानि ताजिकभूषणे॥ इक्कवालेंदुवाराख्यः मुत्थशी
ल मतः परं॥ ईशराफश्च नक्तं च यमयामणऊं स्ततः॥ कंबूलं गैरकंबूलं खल्लासरक
रं द्वकोततेनाडुः फालिकुत्थश्च दुत्थदधीर १३ तं विरो। कुत्थश्च दुरफाश्चेते योगाः षोड

५१

ना।जिकसारोद्धारे।हर्षितोबलवृद्धिरुक्त।।बलवृद्धिर्यथा।।हर्षस्थानगतो ग्रहोयदि द्रग्धवीर्य स्तदा
हीनबलत्वं भजति।हीनोमध्यग्बलत्वंमध्यो उत्तमत्वं।उत्तम स्वत्युत्तमत्वं प्राप्नोतीत्यर्थः।। अत्र विशेष
कोउक्तः पद्धतिभूषणे।हर्षान्विताहर्षपदेपंचविंशोपकामता।।हर्षस्थानेचतुष्कस्थःखेटःस्यात्पूर्ण
हर्षितइति।।अत्रसमरसिंहटीकायांतुज्योतिर्विद्भिरेकैकहर्षस्थानेस्वसमितं बलमुक्तं।तच्चापितनव
मादिस्थानेषुलग्नात्त्रित्रिभेषु च।।पूर्वोक्तयुक्त्याग्रहाणांभावफलमेवबलं।।स्वगृहोच्चबलंतुराशेस्तेन।
परमोच्चंतुभोचुर्ग्रहविदोजनाः।।राशेर्पन्नेपूर्णफलदंस्वगृहं च तथाविदु।रितिताजिकनीलकंठोक्तताजि
कवचनात्स्वगृहस्वोच्चस्थग्रहस्य शादिकंद्विगुणंस्वगृहस्वोच्चबलं भवति।।दिन
रात्रिबलंतुपूर्वोक्तं।ग्रहादिबलमेवज्ञेयं।पुनर्ग्रहाणांविंशोपकबलेषुयोज्यमितितत्वं।।
सर्वेषां बलानामैक्यं स्फुटबलं भवति स्फुटबलेनैववर्षेशफलंदशाफलादिकंचज्ञेय
मितिविमलं।।अथ मंहर्षबलेधिकस्थानानिकेषांचिद्ग्रहाणामुक्तानि।।प्रश्नवैभवा
फर्न१० वंधु४ घनंचेंदो [illegible] स्तूर्य४ज्ञस्यादयं१रवेः।घूनं७ भौमस्यघर्मंदं९ शनेः प्राकृ
त्रहर्षदमिति।।यादवेनतुपंचहर्षस्थानान्युक्तानि।नंदाँ९स्मितेर्कैदु११ शिवै५ र्षिभिर्नारव्यो१२ः।।

शकीर्तिताः॥ ताजिकाचार्यवर्यैश्च फलविज्ञानहेतवे॥ अथ षोडशयोगानां पर्या
यशब्दाः॥ इक्कवालो नाम कार्यसिद्धिविषये इक्कवालो नाम नियमः॥ यथा भाषांतरे कौ
लवना मइति इंदुवारो नाम द्विवारं मिलित्वा कार्यकरणं किंचित्त्याक् किंचित्य आलंध्ये
अवस्थानमिति॥ मुथशीले नाम कार्यविषये मुखे स्थितवचनस्य शीलमाचरणाकरणमिति।
कार्यं नियतमेव भविष्यतीत्यर्थः॥ अथ ईसराफो नाम विपरीतकरणं। यथा भाषांतरे इसारा
इपुरुषगुनी तिकरणवाचकः॥ यथायस्मिन्नीसरीफ शब्दो रकारभेदाद्विपरीतार्थकार्यं
तायत्रकुर्वधि॥ अथनक्त नाम गुप्तमप्रगटरूपं कार्यसिद्धिकरणरूपमित्यर्थः। अथ यमया
नाम यमनियमयतीति यमया॥ मणऊ नाम नियमो निष्ठनदनुरूपं पदं पदं यातीति॥ एवं तु
प्रधानपदं तस्मादित्यस्मिन्यमयायोगे। प्रधानकार्यसिद्धिरिति॥ अथ मणऊ नाम मनस्ता
पः कार्यसिद्धित्वान्म नक्लापो नाम चित्तोद्विग्नता॥ अथ कंबूलनाम कार्यसिद्धिर्नियमात्किः॥
यस्याधिनं कार्यं स एव कथयिष्यति त्वदीयं करिष्यामीति॥ अथ गैरकंबूलं नाम कार्यसिद्धिक
र्तुः॥ पुरुषस्य द्विधा चित्तवृत्तिरपि कार्यसिद्धिकरणमित्यर्थः॥ खल्लासरो नाम कार्यं न किमपि

सिध्यति।यस्याधीनंकार्यंसपुरुषएवंकथयिष्यति।त्वयानविलंबःकर्तव्यः॥अतल्पदीर्घका



र्यंनास्तीतिभाषांतरेहेस्वामिन्भवतामदीयंकार्यं॥कर्तुंनशक्यते॥तर्हिखल्लासरःकर्तव्यः॥॥

आशाव्यतिरिक्तोभविष्यामीति॥अथरद्दोनामकार्यदूरीकरणंकार्यनाशकरणमित्यर्थः

तत्रैव।आदौकार्यसम्यक्पश्चात्तस्यासिद्धिकरणमिति।यथाकस्मिंश्चित्कषायकार्यमुद्दि

ष्टंनादौतत्पश्चाद्दूरीक्रियतेनतथैवात्र।अथबापूर्वकार्यारद्दशब्दनाशःमध्येकिमपिनास्ति॥

कालांतरेसिद्धिरिति॥अथदःफालिकुत्थनामबद्धयत्नेनकार्यसिद्धिः॥स्वीयप्रयत्नाद्वाकार्य॰

कर्तुःपुरुषस्यप्रयत्नादिवकार्यसिद्धिः॥अथदुत्थउत्थनामाद्विप्रकारमुत्थितमुत्थन्नातघया

लक्षणंनियतंचक्षणमनियतमपिकार्यसिद्धिप्राप्नुयादिति॥अथतंबीरनामकार्यस्वामि

नंपुरुषमविदितंकृत्वाविख्याततयत्कार्यंसिध्यति।भाषांतरेतंभगिराकरणमित्यर्थः॥यथा



लोकेननपुरुषेणायत्नेनवाअमुकंकार्यंतामगीकृतंतथैवात्र।अथकुत्थंनाममहद्वलंचत्वरं

कार्यंमर्येति।प्रयासेनसिध्यति॥अथदुरुफनामआद्यंतेप्पभ्रंशं॥इतिषोडशयोगानांना

मानुरूपव्याख्या॥ अथेत्थशालादियोगोपयुक्ताः सूर्यादीनां दीप्तांशा उक्ताः ताजिसिंहेन॥
रव्यनेर्कइहपंचदशांशैः १५ इंदुःकेत्ररविभिः १२ विधुराः १ प्र.ष्टभिर्भृगुसूनुः ७ गांकातनूजो
सप्तभिर्गुरुशनीनवभिर्ज्ञाति ताजिकसारेपि रविः शशांकः १५ स्तपनैः १२ श
शांकोलवैर्महीजोवसु ८ भिर्ग्रभागैः स भार्गवोसप्त ७ लवैर्न भोगैः ९ र्देवेज्यमं
दोप्रभृतिं करोति॥ १ अत्र रविः पंचदशभिः प्रभृतिं वक्ष्यमाणेत्थशालादियोगंक
रोतीत्यर्थः देयपदे द्वयोरंतरंकृतसतियदि पूर्वोक्ता एते पंचदशाद्यंशा भवंति
तदा रव्यादयो ग्रहाः पश्यंति एवं सर्वत्र प्रश्ने वैष्वमे वर्षे होरापि दीप्तांशा द्वादशस
क्ताः १ अथैकवालेंदुवारो तत्रैकवालेंदुवारयोर्लक्षणमुक्तं संज्ञातंत्रे चैकं
दकेफणफरे च खगाः समस्ताः स्यादिक्कवाल इतिराज्यसुखाप्तिहेतुः १ आपोक्लि
मे ३।६।९।१२ यदिखगाः सकैंदुवारो न स्याच्छुभः क्वचिन्नताजिकशास्त्रगीत
मिति १ अत्र वर्षप्रवेशे इक्कवाल योगोत्पत्तौ राज्यसुखयोर्लाभः कलानुमानेन वाच्या

वर्षारिष्टेष्वरिष्टभंगो वाच्यः। क्वचन वर्षप्रवेशमासप्रवेशादौ यदा तु केंद्रापोक्लिमस्था ग्रहाः॥ पणफरापोक्लिमस्थास्युस्तदा कोपि योगो न संभवेत्॥ सर्वग्रहा द्वित्रिष्वपि केंद्रादिषु स्थिता योगकर्तारो ज्ञेया इति जीर्णटीकाकृत्॥ यादवेनैतौ योगावन्यथैव कथितौ। केंद्रस्थितद्वितयराशिगयोः स्वधाम्नो दृष्टिस्तदा निगदितोत्र सइक्कवालः॥ आपोक्लिमोपगतकेंद्रगयोर्यदि स्याद्योगस्तदा मुनिवरैः सइंदुवार इति॥ द्वयोरेव ग्रहयोः केंद्रपणफरस्थयोर्दृष्टौ सत्यामिक्कवालयोगः॥ दृष्टौ सत्यां केंद्रापोक्लिमस्थयोर्द्वयोरेव ग्रहयोरिंदुवारयोग इति यादवमतं। अत्र दीप्तांशैर्दृष्टौ सत्यां योगसंभवं त्वनेतो यादवोक्त एव पक्षः साधीयानिति चिंतयंतो यमयायोगे सर्वैस्ताजिककर्तृभिर्दृष्ट्याभाव उदाहृतोस्ति। इति इक्कवालेंदुवारौ। अथ इत्थशालः॥ तत्र वर्तमानपरिपूर्णभविष्यन्मुथशिलभेदेन त्रिधेत्थशालयोगः॥ तत्र वर्तमानमुथशिलयोगलक्षणमुक्तं ताजिकालंकारे॥ दृष्टौ सत्यां प्राक्तनदीप्ताख्यभागैर्मंदात्खेटाच्छीघ्रखेटो यदाल्पः॥ अंशैस्तुल्यं किंचिदूनस्तदेत्थशालो योगो मुत्थशिलः स एवेति। अत्रेत्थशालादियोगेषु ग्रहाणां शीघ्रगत्वं मंदगत्वं च स्पष्टगत्या ज्ञेयं॥ ॥ ॥